कविहृदयम्–

# पण्डितः पाठनकुशलः अपि भवेत्

**शिष्टा क्रिया कस्यचिदात्मसंस्था**
**सङ्क्रान्तिरन्यस्य विशेषयुक्ता ।**
**यस्योभयं साधु स शिक्षकाणां**
**धुरि प्रतिष्ठापयितव्य एव ।।** (कालिदासः)

"केचन परिश्रमेण पाण्डित्यं सम्पादयन्ति, किन्तु सम्यक् पाठयितुं न शक्नुवन्ति। अन्येषां केषाञ्चित् पाठनकौशलं विशेषतः भवति, किन्तु पाण्डित्यशून्यता। यः पण्डितः सन् सम्यक् पाठयितुम् अपि शक्नोति स एव उत्तमः शिक्षकः। स एव शिक्षकाणाम् अग्रगण्यः" इति वदति कविकुलगुरुः कालिदासः।

शिक्षकस्य मुखद्वयम् – पाण्डित्यं पाठनकौशलं चेति। ये महापण्डिताः भवन्ति, ये च शास्त्रनिपुणाः भवन्ति, ते उत्तमाः शिक्षकाः भवन्ति एव इति न। केचन तु पाण्डित्ये अवरा एव, किन्तु ते पाठने अतिकुशलाः भवन्ति। यावत् जानन्ति तावत् अतिरमणीयतया पाठयन्ति। पाण्डित्यं बुद्धेः विषयः। पाठनं कौशलस्य विषयः। (Skill) नाणकस्य मुखयोः इव एतयोः न अविनाभावसम्बन्धः। केवलपण्डितः वा, केवलपाठनकुशलः वा उत्तमशिक्षकत्वेन न परिगण्यते। उत्तमः शिक्षकः स एव भवति, यश्च पण्डितः सन् पाठनकुशलोऽपि भवति।

इदानीं संस्कृतलोकस्य दृष्टिः कथम् अस्ति? 'यः पदवीपर्यन्त पठितवान् सः समर्थतया पाठयितुं शक्नोति।' 'प्रान्तीयभाषया संस्कृतशब्दस्य अर्थः उक्तः चेत्, अनुवादपद्धत्या अन्वयार्थः ज्ञापितः चेत् पाठनं समाप्तम्' इत्येव वयं चिन्तयामः। 'पाठनं काचित् कला (Skill)' इति अस्माभिः न तथा अङ्गीकृतम्। जगति इदानीं शिक्षणम् एव एकं विशिष्टं शास्त्रम्। तत्र विभिन्नाः प्रयोगाः क्रियन्ते। विभिन्नाः पद्धतयः च आविष्क्रियन्ते। किमधिकं वक्तव्यम्? शिक्षणस्य अवान्तरभागाः अपि इदानीं पृथक्शास्त्रत्वेन परिवृद्धाः दृश्यन्ते। एतस्य चिन्तनस्य सदुपयोगः संस्कृतज्ञैः स्वीकरणीयः। अत्रापि नूतनः आविष्कारः सम्पादनीयः।

शिक्षणशास्त्रम् इति शब्दस्य श्रवणसमनन्तरम् एव 'शास्त्राणि षड् एव किल इति आरभ्य 'शिक्षणस्य शास्त्रत्वं सम्पद्येत वा न वा' इति वादविवादे एव अस्मदीयं चिन्तनं स्थगयामः वयम्। प्रयोगस्य आरम्भः वा आविष्कारस्य सम्पादनं वा दूरे एव तिष्ठति!

# तत्तत्प्रान्ते स स शब्दः

शिष्यः – आचार्य! 'व्यवहारतः शब्दाः सिध्यन्ति' इति विषये वयं किञ्चित् चिन्तितवन्तः। 'शब्दक्षेत्रे व्याकरणाविरुद्धः व्यवहारः एव प्रमाणम्' इति तु सर्वानुमतः अभिप्रायः। किन्तु व्यवहारे एकस्मिन् एव अर्थे बहवः शब्दाः प्रयुज्यमानाः दृश्यन्ते। तत्तस्य प्रयोक्ता चिन्तयति – मया उपयुज्यमानः शब्दः एव साधुः इति। तदा कः शब्दः स्वीकरणीयः? अत्र अस्माकं धारणा का?

आचार्यः – एकम् उदाहरणं प्रदर्शयतु।

शि – 'Hotel' इत्येतत् बोधयितुम् उपाहारमन्दिरं, भोजनशाला, फलाहारमन्दिरम्, अट्टशूलः इत्यादयः शब्दाः प्रयुज्यमानाः दृश्यन्ते।

आ – एतादृशसन्दर्भे सरलः संस्कृतानभिज्ञैः अपि ज्ञायमानः शब्दः स्वीकरणीयः। अत्रैव पश्यतु, अट्टशूलशब्दं पण्डिताः केवलं जानन्ति। सरलः 'उपाहारमन्दिरम्' इति शब्दः अत्र स्वीकारार्हः दृश्यन्ते। प्रान्तीयभाषायाम् अपि स च शब्दः अस्तीति कारणतः तस्य अर्थावबोधः सुलभः।

शि – श्रीमन्, एवं चेत् एकैकस्मिन् प्रान्ते एकैकः शब्दः स्वीकरणीयः भवेत्। प्रान्तान्तरे 'भोजनशाला' इति शब्दः तत्प्रान्तीयभाषायां उपयुज्यते चेत् सः एव तत्र स्वीकरणीयः भवेत्।

आ – ते तथा स्वीकुर्वन्तु, का हानिः तेन?

शि – 'शब्दस्वीकारे एकरूपता भवेत्' इति तत्त्वस्य का गतिः?

आ – 'एकरूपता भवेत्' इति चिन्तनसमये 'बलात् आरोपितं शब्दं जनाः तिरस्कुर्युः' इति अंशोऽपि न विस्मरणीयः। यत्र प्रकृतिप्रत्ययविवेकसहितः सरलः कश्चन शब्दः व्यवह्रियमाणः अस्ति तत्र अन्यं शब्दम् आरोपयितुं न शक्नुमः। 'अन्यः शब्दः किमर्थं स्वीकरणीयः?' इति ते पृच्छन्ति एव। केन तर्केण समाधातुं शक्यते तत्र? 'अन्यः शब्दः एव मास्तु, एषः एव भवतु' इति ते वदेयुः अपि। किम् उत्तरम् अस्माकम्?

शि – एवं तर्हि 'अ' प्रान्ते 'उपाहारमन्दिरम्' इति शब्दः, 'ब' प्रान्ते 'भोजनशाला' इति शब्दः, 'क' प्रान्ते 'अट्टशूलः' इति शब्दः। (शब्दान्तरं वा) एवम् एव एकत्र 'उपाहारः', अपरत्र 'फलाहारः', अन्यत्र 'जलपानम्', कुत्रचित् 'अल्पाहारः', पुनः कुत्रचित् 'प्रातराशः'।

आ – भवतु इति वदामि। तेन न कोऽपि हानिः। तत्तत्प्रान्ते तत्तस्य शब्दस्य रूढिबलम् अस्ति इति न विस्मरणीयम्। एतेषु कोऽपि असंस्कृतः शब्दः चेत् स च विषयः भिन्नः। सर्वे अपि संस्कृताः एव चेत् केन प्रमाणेन भवान् 'एषः एव शब्दः भवतु' इति वदति? कालान्तरे व्यवहारः एव सर्वं निर्णेष्यति। सामर्थ्यतारतम्यात् कदाचित् एकः एव शब्दः व्यवहारेण अङ्गीकृतः भवेत्। अथवा समानबलत्वात् सर्वे अपि अङ्गीकृताः भवेयुः। सर्वे अपि तथैव स्थिताः इत्येव चिन्तयेम, तदा किं भवेत्? अमरादिकोषाः इव एतादृशानाम् आधुनिकशब्दानां नूतनः कश्चन कोषः निर्मितः भवेत्, यत्र च पर्यायपदानि निर्दिष्टानि भवन्ति।

शि – एकस्मिन् प्रान्ते पर्यायपदेषु बहुषु सत्सु अपि सरलसंस्कृतादिनियमानुसारम् एकम् एव शब्दं व्यवहारार्थं यथा स्वीकुर्मः तथैव अत्रापि नूतनशब्दानां विषये अपि कर्तुं न शक्येत वा?

आ – न शक्यते एव। एकस्मिन् प्रान्ते बहुषु शब्देषु सत्सु अपि एकस्य एव शब्दस्य सरलतादि – नियमबद्धत्वं, रूढिबलं च भवति सामान्यतः। अतः तत्र निर्णयः न क्लेशाय। प्रान्तद्वयस्य व्यवहारे एतत् न शक्यते। प्रान्तद्वये अपि तत्तत्प्रान्तस्य शब्दस्य रूढिबलं समानं भवति किल?

शि – संस्कृतस्य शब्दस्य व्यापकं रूढिबलम् अपि यदि स्यात्, तर्हि स च शब्दः तत्प्रान्ते व्यवहारे स्वीकरणीयः इति खलु कथनस्य सारः?

आ – आम्। एतस्मिन् एव सन्दर्भे संस्कृताभासकाः, भिन्नप्रवृत्तिनिमित्तकाः (येषां प्रवृत्तिनिमित्तम् अन्यत्, प्रयोगश्च अन्यार्थे) च परिहरणीयाः। ऐक्यता, दार्ढ्यता, हन्तकः इत्यादयः संस्कृताभासकाः। उचितः (निश्शुल्कम् इत्यर्थे), आग्रहः (कोपः इत्यर्थे), व्यापारः (वाणिज्यम् इत्यर्थे) इत्यादीनां प्रवृत्तिनिमित्तं भिन्नं, प्रयोगश्च भिन्नार्थे। जागरूकतया परिशील्य एतादृशाः शब्दाः परिहरणीयाः।



# चन्दमामा

जून्-१९८७

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. २-५०

वार्षिकं ग्राहकशुल्कं रू. ३०-००




# चन्दमामा

संस्थापकः– 'चक्रपाणिः'　　　सञ्चालकः– नागिरेड्डी'

जीवने 'अल्पतृप्तता' धनविषये भवेत्, न कदापि ज्ञानविषये। किन्तु वैपरीत्यं यत् बहुसङ्ख्याकाः संस्कृतज्ञाः ज्ञानविषये अल्पतृप्ता! 'यावत् जानामि, तावत् एव पर्याप्तम्' इति चिन्तयन्तः ते उदासीनाः भवन्ति।

अत्र तेषां वृत्तिः अपि कारणं भवितुम् अर्हति। संस्कृतज्ञेषु शिक्षकाः एव अधिकाः। तत्रापि आरम्भस्तरीयं विषयम् एव पाठयन्ति बहवः। तत्सन्दर्भे भाषायाः विविधमुखानाम् आवश्यकता न भवति। अतः ते क्रमशः भाषाप्रगतिसाधने उदासीनतां भजन्ते।

एतन्निवारणार्थं सम्भाषणम् एकः उत्तमः परिहारः। व्रतरूपेण सम्भाषणं करणीयं चेत् भाषायाः विभिन्नमुखानाम् उपयोगः करणीयः भवति। तदा वक्ता आत्मनः इयत्तां (अल्पज्ञतां) जानाति। विकासस्य दिशि प्रवर्तते च। सर्वविधभावानां प्रकाशने असामर्थ्यम्, 'इदमित्थम्' इति निर्णये दौर्बल्यम् इत्यादयः स्वाभाविकतया तं जिज्ञासापथे प्रेरयन्ति।

किन्तु सम्भाषणक्षेत्रे अपि अल्पतृप्ततायाः आपत्तिः नास्ति इति न। किन्तु शिक्षणक्षेत्रे अविद्यमानः अवकाशः अत्र सम्भाषणक्षेत्रे अस्ति। शिक्षणक्षेत्रे अध्यापनं (Teaching) प्रधानं चेत् अत्र सम्भाषणक्षेत्रे भाषा एव साधनम्। अतः अत्र बहुविधप्रयोगान् कर्तुं यथेष्टम् अवकाशः अस्ति।

सम्पुटः - ३　　　जून्-८७　　　सञ्चिका - ३

प्रतिकृतिमूल्यं रू. २-५० * वार्षिकं ग्राहकशुल्कं रू. ३०-००

CHITRA

रसप्रश्नाः

# वाल्मीकिः मुनिपुङ्गवः

(वाल्मीकिजीवनसम्बन्धे रामायणारम्भसम्बन्धे च अत्र केचन प्रश्नाः सन्ति। उत्तरम् अपि अधः सूचितम् एव। उत्तरस्य विकल्पत्रयम् अस्ति। युक्तम् उत्तरं सूचयन्तु)

I वाल्मीकेः आश्रमः कस्याः नद्याः तीरे अस्ति?
(१. गङ्गानदीतीरे। २. तमसातीरे। ३. गोदावरीतीरे।)

II वाल्मीकेः पितुः नाम किम्?
(१. वल्मीकः। २. प्रचेताः। ३. भरद्वाजः।)

III रामकथां वाल्मीकये कः उक्तवान्?
(१. नारदः। २. ब्रह्मा। ३. महाविष्णुः।)

IV वाल्मीकिना दृष्टः क्रौञ्चवधः कस्मिन् समये प्रवृत्तः?
(१. उषःकाले। २. मध्याह्ने। ३. सायं प्रदोषसमये।)

V क्रौञ्चवधसन्दर्भे वाल्मीकिना सह स्थितस्य शिष्यस्य नाम किम्?
(१. अगस्त्यः। २. गौतमः। ३. भरद्वाजः।)

VI 'मा निषाद......' इत्ययं श्लोकःकस्मिन् छन्दसि अस्ति?
(१. आर्यावृत्ते। २. अनुष्टुब्वृत्ते। ३. विषमवृत्ते।)

VII वाल्मीकिः व्याधाय शापं दत्तवान् यतः–
(१. व्याधः प्राणिहिंसां कृतवान् आसीत्। २. क्रौञ्चपक्षी वाल्मीकेः प्रीतिपात्रम् आसीत्। ३. व्याधः काममोहितं पक्षिणं मारितवान् आसीत्।)

VIII वाल्मीकेः पुरतः ब्रह्मा कदा प्रत्यक्षम् अभवत्?
(१. क्रौञ्चवधतः पूर्वम्। २. क्रौञ्चवधसन्दर्भे। ३. क्रौञ्चवधानन्तरम्।)

IX वाल्मीकिना विरचितं रामायणं प्रथमं कौ गीतवन्तौ?
(१. कुशीलवौ। २. कुशलवौ। ३. अश्विनीकुमारौ।)

X वाल्मीकिः कस्मिन् युगे आसीत्?
(१. कृतयुगे। २. कलियुगे। ३. त्रेतायुगे।)

उत्तराणि – I–२. II–२. III–१. IV–२. V–३. VI–२. VII–३. VIII–३. IX–२. X–३.

## रसवार्ताः



### मूकत्वनिवारकः स्वप्नः!

एषु दिनेषु कश्चित् रशिया सैनिकः एकं स्वप्नं दृष्टवान्, यश्च द्वितीयप्रपञ्चयुद्धसन्दर्भे श्रवणशक्तितः सम्भाषणशक्तितः च वञ्चितः जातः आसीत्। स्वप्ने सः युद्धरङ्गे नाजीसेनया क्रियमाणम् आक्रमणं, तत्सन्दर्भे आत्मना कृतं रणोद्घोषं च दृष्टवान्। अनन्तरक्षणे एव भीतस्य तस्य जागरणं जातम्। किन्तु वैचित्र्यं यत् तदा तस्य बधिरत्वं मूकत्वं च अपगतम् आसीत्!

### मार्कट्वैन्लिखिता अन्तिमकादम्बरी



हकील् बेरिफिन्, टाम् स्वायर् इत्यादिकृतीः रचितवान् सुप्रसिद्धलेखकः मार्कट्वैन् १९१० तमे वत्सरे दिवं गतः इति विषयं सर्वे जानन्ति एव। किन्तु तेन अन्त्यसमये लिखिता एका कादम्बरी अद्यावधि न प्रकाशिता। मिसोरीविश्वविद्यालयस्य अध्यापकः कश्चित् एताम् अन्विष्टवान्। एषा विषादपूर्णा कादम्बरी।



### अश्रुभिः रोगोपशमनम्!

अश्रुविमोचनं मनःकषायं अपसारयति, तथैव रोगापगमने अपि तत् उपकरोति इति सोवियत् रशिया देशीयः कश्चन संशोधकगणः प्रकटयति।

### कपि-स्थलज्ञः मनुष्यः



स्वस्थाने स्थित्वा एव कपीनां स्थानं सूचयितुं समर्थः कश्चित् सानफ्रान्सिस्कोप्रदेशे अस्ति। प्राणिप्रदर्शनशालातः कपयः कदाचित् पलायनं कुर्वन्ति चेत् तान् अन्वेष्टुम् अधिकारिणः एतस्य समीपम् आगच्छन्ति। ते कुत्र तिष्ठन्ति इति एषः निर्दुष्टं सूचयति। 'किन्तु समस्या नाम तस्मात् स्थलात् ते कपयः कथम् आनेतव्याः इत्येव' इति वदन्ति प्रदर्शनालयस्य अधिकारिणः।

पुराणगाथावली–

# जा जि.लिः

पूर्वसमुद्रतीरे अरण्ये जाजलिः नाम मुनिः तपः आचरन्, क्रूरमृगेभ्यः अभीतः, वृष्ट्यातपादिभिः अखिद्यमानः, अचलः, नियमपरश्च सन् सुदीर्घं कालं यापितवान्।

एकदा सः एवं तपः कुर्वन् आसीत्। तदा उभौ चटकौ आगत्य तस्य शिरसि उपविष्टवन्तौ। 'एतौ न पीडनीयौ' इति चिन्तयन् जाजलिः शिरः न कम्पितवान् अपि। किञ्चित्कालानन्तरं तौ चटकौ इतस्ततः गत्वा तृणादिकम् आनीय तस्य केशानां मध्ये नीडं रचयितुम् आरब्धवन्तौ। तथापि जाजलिः तथैव निश्चलः आसीत्।

दिनानि अतीतानि। नीडे चटकयोः अण्डानि आगतानि। अण्डेभ्यः शावकाः अपि निर्गताः। यदा ते शावकाः पक्षवन्तः अभवन् तदा चटकौ शावकैः सह उड्डीय कुत्रापि गतवन्तौ। 'चटकौ पुनः प्रत्यागच्छेताम्' इति चिन्तयन् जाजलिः तया एव निश्चलभङ्ग्या एकं मासं यापितवान्। किन्तु निर्गतौ तौ चटकौ न प्रत्यागतौ। तदा जाजिलिः निश्चलस्थितिं परित्यज्य स्नानार्थं समुद्रं गतवान्।

समुद्रस्नानसमये चटकयोः विषये आत्मना प्रदर्शितां करुणां, निश्चलस्थितौ प्रदर्शितां सहनशक्तिं च स्मृत्वा सः हसितवान्। तत्क्षणे कश्चन राक्षसः समुद्रतलात् उत्थाय– "जाजिले! भवतः हासस्य कारणम् अहं जानामि। कृतस्य सत्कार्यस्य कारणतः गर्वं यः प्राप्नोति सः फलात् वञ्चितः भवति। सत्कार्यकरणानन्तरं विनयः प्रदर्शनीयः, न तु गर्वः। एषः विषयः कदापि न विस्मरणीयः। इदानीं कृतस्य अकार्यस्य दोषपरिहारार्थं भवता काशीनगरं गत्वा तुलाधरस्य दर्शनं करणीयम्" इति उक्त्वा अदृश्यतां गतः।

राक्षसस्य आदेशानुसारं जाजलिः काशीनगरं गत्वा तुलाधरं दृष्टवान्। ततः अनेकान् धर्मसूक्ष्मान् ज्ञात्वा 'विनयशीलः' इति कीर्तिं सम्पादितवान् च।





# उपकारी वामनः

पूर्वं कस्मिंश्चित् ग्रामे कश्चन निर्धनः कृषिकः आसीत्। सः धनिकस्य भूमिं स्वीकृत्य कृषिं करोति स्म। प्रतिवर्षं धनिकाय भूशुल्कं दातव्यम् आसीत्।

किन्तु एतस्य निर्धनस्य भूमिः न सारयुता। तथापि 'प्रयत्नेन द्वित्रेषु वर्षेषु फलसमृद्धिः प्राप्तुं शक्येत' इति भावनया तस्यां भूमौ कृषिम् अङ्गीकृतवान् आसीत् सः। किन्तु यथा चिन्तितं तथा न प्रवृत्तम्।

एवं स्थिते एकदा तस्मिन् प्रदेशे अतिवृष्टिः सञ्जाता। क्षेत्रे आरोपितानि सस्यानि सर्वाणि नष्टानि। केवलम् एतावदेव न, कृषिकस्य एकः वृषभः अपि जलप्रवाहेण नीतः।

यावत् वा हानिः भवतु, कृषिकः एतावत्पर्यन्तं धनिकाय भूशुल्कं नियतरूपेण यच्छन् आसीत्। अतः तां परम्परां पालयितुम् इच्छन् कृषिकः अवशिष्टम् एकं वृषभम् अपि विक्रेतुं निश्चितवान्।

यदा सः विपणिं प्रति गच्छन् आसीत् तदा कश्चन वामनः तेन मार्गे दृष्टः। व्रणितः स सम्यक् गन्तुं न शक्नोति स्म।

कृषिकं दृष्ट्वा सः पङ्गुः वामनः पृष्टवान्– "भोः, मम पादे व्रणः सञ्जातः। चलितुं न शक्नोमि एव। अतः किञ्चिद्दूरं मां वृषभस्य उपरि आरोप्य नयति वा भवान्?" इति।

कृषिकः वामनस्य दयनीयां परिस्थितिं दृष्ट्वा खेदं प्रदर्शयन्– "भवान् चलितुं कष्टम् अनुभवति इति अहम् अपि पश्यामि किल? किन्तु गोजातीयस्य उपरि उपविश्य कृतं प्रयाणं पापाय इति ज्येष्ठाः वदन्ति अपि" इति उक्तवान्।

एतत् श्रुत्वा दीनतां प्रदर्शयन् सः वामनः– "यदि एतस्मिन् अरण्यमार्गे अन्धकारः अपि भवेत् तर्हि मम परिस्थितिः

शोचनीयतां प्राप्नुयात्।" इति उक्तवान्।

एतत् वचनं श्रुतवतः कृषिकस्य हृदये दया उत्पन्ना। सः वामनम्– "अस्तु तर्हि। आपद्धर्मः अपि कश्चन अस्ति किल" इति वदन् तम् उन्नीय वृषभस्य उपरि उपवेशितवान्।

एवं प्रयाणं किञ्चिद्दूरं प्रवृत्तम्। प्रयाणसन्दर्भे वामनः कृषिकस्य मुखात् तदीयां कष्टपरिस्थितिं श्रुतवान्। "महता श्रमेण किमर्थं तावद्दूरं गत्वा विक्रयणं करणीयम्? एतं वृषभम् अहम् एव क्रेतुम् इच्छामि" इति उक्तवान् सः।

कृषिकः वामनस्य प्रस्तावम् अङ्गीकृतवान्। वामनः स्वकोषतः एकम् आवरणसहितं पात्रं बहिः आनीतवान्। तत् कांस्यनिर्मितं जलपात्रम्। तस्य उपरि अनेकानि वामनानां चित्राणि चित्रितानि आसन्।

कृषिकाय तत् कांस्यपात्रं यच्छन् वामनः उक्तवान्– "एतत् एव भवतः वृषभाय मया दीयमानं मूल्यम्। एतत् स्वीकृत्य भवान् निश्चिन्ततया गृहं गन्तुम् अर्हति" इति।

एतत् श्रुत्वा आश्चर्यं प्रकटयन् कृषिकः पृष्टवान्– "एतस्य कांस्यपात्रस्य मम वृषभस्य च मूल्यं समानं वा? धनिकाय यावत् दातव्यं तावत् धन किम् एतत् कांस्यपात्रं दास्यति? " इति।

वामनः उच्चैः हसन्– "मम वचने विश्वासः भवतु। एतत् कांस्यपात्रं भवतः कष्टानि निवारयति, सम्पत्तिं वर्धयति" इति



वदन् तस्य पात्रस्य आवरणम् अपसारितवान्।

अनन्तरक्षणे तस्य पात्रस्य अन्तर्भागतः सुमधुरः सङ्गीतध्वनिः आगतः। वामनः पात्रस्य आवरणं यथापूर्वं स्थापयित्वा– "एतादृशं सङ्गीतं श्रावयितुं यक्षाः केवलं शक्नुवन्ति, न तु इतरे " इति उक्तवान्।

"तन्नाम सङ्गीतश्रवणेन मया मत्पत्नीपुत्रैः च स्वकीयम् उदरं पूरणीयम् इति वा भवतः अभिप्रायः?" इति पृष्टवान् कृषिकः।

तदा सः वामनः– "अहो! अहं विस्मृतवान् आसम्" इति वदन् तस्य कांस्यपात्रस्य उपयोगक्रमं सूचितवान्– "मुख्यः विषयः भवते वक्तव्यः मया। भवान् गृहं गत्वा शुद्धं स्नात्वा गृहस्य मध्ये किञ्चन स्थलं शुद्धीकृत्य तत्र एतत् पात्रं स्थापयतु। अनन्तरम् आवरणम् उद्घाट्य 'कांस्यपात्र! कांस्यपात्र! भवान् यत् शक्नोति तत् करोतु' इति वदतु। तदा भवतः इष्टं पूरितं भवति। ज्ञातं किल?" इति। अनन्तरं वृषभं प्रेरयन् कुत्रापि अदृश्यः अभवत् सः।

कृषिकः कुतूहलेन तत् कास्यपात्रं स्वीकृत्य गृहं प्रतिगतवान्। प्रवृत्तं सर्वं श्रुत्वा तस्य पत्नी आश्चर्येण उक्तवती– "एतेन पात्रेण अस्माकं किं प्रयोजनम्? कोऽपि भवन्तं पूर्णतः वञ्चितवान" इति।

"सः वञ्चकः इव न भासते स्म। अस्तु तावत्, परीक्षणेन वस्तुस्थितिः ज्ञायते किल?" इति वदन् कृषिकः स्नात्वा, गृहस्य मध्ये किञ्चन स्थलं शुद्धीकृत्य च





कांस्यपात्रस्य आवरणम् उद्घाटितवान्। "कांस्यपात्र! कांस्यपात्र! भवान् यत् शक्नोति तत् करोतु" इति उक्तवान् च।

अनन्तरक्षणे तस्मात् कांस्यपात्रतः उभौ वामनौ खङ्ग् खङ्ग् इति शब्दं कुर्वन्तौ बहिः आगतवन्तौ। तत्रस्थस्य मञ्चस्य उपरि सुवर्णमयानि रजतमयानि च नाणकानि राशीकृतवन्तौ। सुवर्णस्थालिकायां भक्ष्यभोज्यादीनि स्थापयित्वा अदृश्यौ जातौ च।

कृषिकगृहसदस्याः अद्यावधि तादृशं रुचिकरं भोजनं न भुक्तवन्तः आसन्। ते सन्तोषेण भोजनं कृतवन्तः। वामनाभ्याम् अनुगृहीतैः रजतसुवर्णनाणकैः उत्तमं गृहं क्रीतवन्तः। इदानीं तस्मिन् गृहे दारिद्र्यं सर्वथा न आसीत्।

निर्धनेन कृषिकेण अकस्मात् ऐश्वर्यं प्राप्तम् इति वार्ताम् एकमासाभ्यन्तरे धनिकः अपि श्रुतवान्। 'कृषिकस्य समीपे अपूर्वं कांस्यपात्रम् अस्ति' इत्यपि सः जनानां मुखतः ज्ञातवान्।

एकदा सः धनिकः कृषिकस्य अनुपस्थितिसमये तदीयं गृहं सेवकैः सह प्रविश्य गृहस्थं धनं तत् कांस्यपात्रं च नीतवान्। धनिकस्य प्रभावः सर्वत्र आसीत्। सः धनबलेन यत्किमपि साधयितुं समर्थः। अतः धनिकेन कृतम् अकार्यं ज्ञात्वा अपि किमपि कर्तुम् अशक्तः कृषिकः मौनं स्थितवान्।

एवं कृषिकः पुनः अपि निर्धनः सञ्जातः। एकदा तस्य पत्नी सूचितवती– "भवान् पुनः एकवारं तं वामनम् अन्विष्य विषयं निवेदयतु" इति।

कृषिकः एतत् अङ्गीकृत्य अरण्यम् उद्दिश्य प्रस्थितवान्। यत्र सः वामनः पूर्वं दृष्टः आसीत् तत् स्थलं प्राप्तवान् सः। तत्रैव कस्यचित् वृक्षस्य शाखायाम् उपविष्टः सः वामनः कृषिकं दृष्ट्वा अधः उत्प्लुतवान्। कृषिकस्य समीपम् आगत्य– "किं भोः कृषिकमहोदय! पुनः किमर्थम् आगतवान्? मया दत्तात् कांस्यपात्रतः किमपि साहाय्यं न प्राप्तं वा? का चिन्ता बाधते भवन्तम्?" इति पृष्टवान्।

कृषिकः प्रवृत्तं सर्वं वामनाय निवेदितवान्। वामनः वृक्षस्य समीपं गत्वा

वृक्षकोटरतः एकं रजतपात्रम् आनीतवान्। तत् कृषिकस्य हस्ते दत्त्वा काश्चन सूचनाः सूचयित्वा च ततः निर्गतवान् सः। कृषिकः एतत् पात्रं स्वीकृत्य सन्तोषेण गृहं प्रत्यागतवान्।

कृषिकस्य चलनवलनं परीक्षितुं नियुक्तानां सेवकानां द्वारा धनिकः एतां वार्तां ज्ञातवान् एव। कांस्यपात्रस्य अपेक्षया रजतपात्रम् एव श्रेष्ठम् इति चिन्तितवान् सः।

'एतत् पात्रम् अपि केनापि उपायेन वशीकरणीयम्' इति सङ्कल्पितवान् धनिकः अतः सः एकं भोजनकूटम् आयोज्य मुख्यातिथित्वेन कृषिकम् आहूतवान्।

कृषिकः यदा उपस्थितः तदा धनिकः बन्धुमित्रेभ्यः कृषिकस्य परिचयम् उक्त्वा– "इदानीं मुख्यातिथित्वेन आगतः एषः कृषिकः स्वसमीपे स्थितस्य विशिष्टस्य रजतपात्रस्य माहात्म्यं प्रदर्शयति" इति सूचितवान्।

कृषिकः स्ववेषेण अन्तरितं तत् रजतपात्रं सर्वेषां पुरतः स्थापितवान्। "भोः रजतपात्र! भवान् यत् कर्तुं शक्नोति तत् करोतु" इति उक्तवान् च।

तदा कुरूपिणौ कृष्णवर्णीयौ महाकायौ खड्ग् खड्ग् इति पात्रात् बहिः आगत्य हूँकुर्वन्तौ हस्तस्थितेन दण्डेन धनिकं ताडयितुम् आरब्धवन्तौ।

वेदनाम् असहमानः धनिकः आक्रन्दनं कुर्वन् कृषिकं दृष्ट्वा– "भोः महोदय! एतौ पुनः पात्रे प्रवेशयतु भोः" इति प्रार्थितवान्।

कृषिकः तु– "प्रथमं मदीयं कांस्यपात्रं पत्यर्पयतु भवान्" इति उक्तवान्।

धनिकः धावन् अन्तः गत्वा तत् कांस्यपात्रम् आनीय कृषिकाय प्रत्यर्पितवान्। तत्क्षणे एव तौ महाकायौ रजतपात्रं प्रविश्य अदृश्यौ जातौ।

अनन्तरं केषुचित् एव दिनेषु कृषिकः महाधनिकेषु अन्यतमः सञ्जातः। यदा सद्यःकालीनाः अपेक्षाः सर्वाः पूरिताः तदा सः कृषिकः तत् पात्रद्वयम् अपि रहस्यरूपेण कुत्रापि गर्ते स्थापितवान्।





# चिरस्थायी

पूर्वं शिवपुरग्रामे रामभद्रः नाम कश्चित् आसीत्। तस्य पुत्री शान्ता। शान्ता अतीव सुन्दरी महाबुद्धिमती च। यदा सा प्राप्तवयस्का जाता तदा रामभद्रः पुत्रीम् उक्तवान् यत् भवती भवत्याः इच्छानुरूपं वरं परिणयतु इति।

'शान्ता परिणेतव्या' इति नारायणः नाम युवकः, सागरः नाम युवकः च अतीव इच्छतः। सागरः धनिकस्य पुत्रः। नारायणः धनवान् न, अपि तु महाबुद्धिमान्।

तौ उभौ अपि स्वकीयाम् इच्छां शान्तायै निवेदितवन्तौ। तदा शान्ता उक्तवती– "प्रथमं भवद्भ्यां मह्यम् एकैकम् उपायनम् आनीय दातव्यम्। यत् उपायनं मह्यं रोचते तत् मम समीपे एव स्थापयामि। यत् न रोचते तत् प्रत्यर्पयामि। यस्य उपायनं मम समीपे तिष्ठति तम् अहं परिणेतुम् इच्छामि इति तेन सिध्यति" इति।

एतत् श्रुत्वा सन्तुष्टः सागरः ततः गत्वा अमूल्यैः रत्नैः युक्तं वज्रहारं कारयित्वा शान्तायै उपायनरूपेण दत्तवान्। नारायणः चतुर्षु दिनेषु महता प्रयत्नेन एक ग्रन्थं विरचितवान्।

तत्र सः धनं मनुष्यं सुखात् दूरं नयति इति, धने यः विश्वसिति सः कालान्तरे अपायात् ग्रस्तः भवति इति, धनम् अन्तःकलहस्य कारणं भवति इति च सम्यक् विशदीकृतवान् आसीत्। प्रेम्णः धनस्य च सम्बन्धः न कल्पनीयः इति विषयं प्रस्तुत्य उदाहरणरूपेण बह्व्यः पुराणकथाः अपि वर्णितवान् आसीत् सः।

स्वकीयम् एतं ग्रन्थं शान्तायै समर्प्य– "निर्धनेन मया दीयमानम् अल्पम् उपायनम् एतत्" इति उक्तवान् नारायणः।

शान्ता उपायनद्वयम् अपि एकं मासं यावत् स्वसमीपे स्थापितवती। अत्रान्तरे

"अनामिका"

सागरस्य पिता पुत्रेण कृतं महत्कार्यं ज्ञातवान्।

सः शान्तायाः समीपम् आगत्य आक्षेपस्वरेण उक्तवान्– "किं भोः, हावभावेन मम पुत्रं मोहयित्वा अमूल्यं रत्नहारं वशीकृतवती किल भवती? अहं तु एतं विवाहं सर्वथा न अङ्गीकरोमि। तं वज्रहारं मह्यं प्रत्यर्पयतु भवती" इति।

शान्ता यावत् उत्तरं दातुम् उद्युक्ता तावति काले सागरः तत्र आगतवान्। सः पितरं कोपेन उक्तवान्- "तात! भवान् अत्र आगतवान् इति ज्ञात्वा अहम् अपि आगतवान्। भवान् यदि शान्तायाः सकाशात् रत्नहारं प्रतिस्वीकरोति तर्हि अहं प्राणैः विमुक्तः भवेयम्" इति।

सागरः पुत्रं विवेकं बोधयितुं बहुधा प्रयत्नं कृतवान्। अन्ते विफलः सः- "अस्तु तावत्, ललाटे यत् लिखितं तत् भविष्यति। भवान् यथा इच्छति तथा करोतु" इति उक्त्वा ततः निर्गतवान्।

"एषा घटना मदनुकूलाय एव जाता। पिता अपि मम विवाहम् अङ्गीकृतवान्" इति उक्तवान् सागरः।

"मदीयं निर्णयम् अद्य सायङ्काले कथयिष्यामि। भवान् आगमनसमये भवतः मित्रं नारायणम् अपि आनयतु" इति शान्ता सागरम् उक्तवती।

तद्दिने सायङ्काले नारायणेन सह सागरः शान्तायाः गृहम् आगतवान्। शान्ता रत्नहारं सागराय प्रत्यर्पयन्ती– "भवदीयं प्रेम भवान् निरूपितवान्। किन्तु भवतः प्रेम



पुरस्कृत्य अहं यदि भवन्तं परिणयेयं तर्हि मम जीवनं सुखमयं न भवेत्। धनार्थं भवन्तं परिणीतवती इति जनाः वदेयुः अपि। धनविषये मम जुगुप्सा। नारायणेन दत्तस्य पुस्तकस्य पठनेन अहं जीवने धनस्य स्थानं किमिति ज्ञातवती'' इति उक्तवती।

अनन्तरं सा नारायणाय पुस्तकं प्रत्यर्पयन्ती– ''अहं सागरे आसक्ता भवेयम् इति विचिन्त्य भवान् एतं ग्रन्थं लिखितवान् इति भाति'' इति उक्तवती।

एतत् श्रुत्वा नारायणः उक्तवान्– ''भवती माम् अन्यथा भावितवती। 'यत् उपायनं भवत्याः समीपे चिरं स्थास्यति तस्य दातारम् अहं परिणेष्यामि' इति उक्तवती किल भवती। अतः एव चिरस्थायिनं विषयं निरूप्य एतं ग्रन्थं लिखितवान्। भवती सागरं परिणयेत् चेदपि मम दुःखं नास्ति। किन्तु भवती तत् न अङ्गीकृतवती। ग्रन्थस्थः विषयः भवत्याः मनसि दृढं लग्नः। ग्रन्थं भवती प्रत्यर्पितवती चेदपि ग्रन्थस्थः विषयः भवत्याः अन्तरङ्गे अस्ति एव, चिरं स्थास्यति च। एवं मया दत्तं भवती स्वसमीपे स्थापितवती। अतः मां परिणेतुम् अर्हति भवती'' इति।

शान्ता तस्य वचनं श्रुत्वा उत्तरं दातुम् अशक्ता मौनं स्थितवती।

तदा सागरः नारायणम् उक्तवान्– ''मित्र! येन दत्तम् उपायनम् अहं मत्समीपे चिरकालं स्थापयिष्यामि तम् अहम् परिणेष्यामि इति शान्ता उक्तवती किल? अतः अहं धनेन तां वशीकर्तुम् इच्छन् तस्यै रत्नहारं दत्तवान्। अभिमानधनाः निर्लोभेन धनं प्रत्यर्पयितुम् अपि शक्नुवन्ति इति अहम् अद्य ज्ञातवान्। शान्तायाः वचनस्य अर्थं ज्ञात्वा भवान् तया प्रत्यर्पयितुम् अशक्यम् एव दत्तवान्। भवता यत् दत्तम् तत् चिरस्थायि। शान्तायै भवान् एव योग्यः वरः इति हृत्पूर्वकम् अहम् अङ्गीकरोमि। भवतोः जीवनं मङ्गलमयं भवतु इति आशासे'' इति।

अनन्तरं शान्ता-नारायणयोः विवाहः सवैभवं सम्पन्नः।






## १२

(कपिलपरदुर्गं प्रविष्टः नागवर्मा सैन्यविहीनः जातः। व्याघ्रचर्मधारिणां नायकेन करवीरेण सह सजीव पलाय्य सः अरण्यं प्रविष्टवान्। तारकेश्वरः सेनानायकः च अनतिकाले कपिलपुरदुर्गं प्राप्तवन्तौ। अनन्तरम् अल्पेषु एव दिनेषु चित्रसेन-कान्तिमत्योः विवाहः सवैभवं सम्पन्नः। विवाहदिने चित्रसेनः उग्राक्षस्य इच्छायाः पूरणं पुनः उच्चरन् अङ्गीकृतवान्। तदनन्तरम्.....)

राक्षसेश्वरः सः उग्राक्षः– "अये प्रियसहचराः! सर्वे आगच्छन्तु अत्र।" इति सर्वान् सहचरान् उच्चैः आहूतवान्।

उग्राक्षस्य ध्वनिं श्रुत्वा सर्वे राक्षसाः हर्षोद्गारं कुर्वन्तः आगतवन्तः। परितः स्थितान् तान् सर्वान् चित्रसेनाय प्रदर्शयन् उग्राक्षः उक्तवान्– "महाराज! यथा अहं तथैव एते सर्वे अपि भवतः दासाः एव। भवतः साहाय्यार्थं वयं सदा सिद्धाः। यस्मिन् कस्मिन् अपि क्षणे काकद्वारा वार्ता प्रेषिता चेदपि वयम् उपस्थिताः भविष्यामः" इति।

चित्रसेनः मन्दहासपूर्वकं शिरः चालितवान्।

"उग्राक्ष! भवतः प्रामाणिकतां साहाय्यबुद्धिं च अहं जानामि। किन्तु मम अपेक्षा अस्ति यत् मदीयं शासनम् अन्यस्य साहाय्यं विना एव सुव्यवस्थितं प्रचलेत् इति। द्रोही नागवर्मा करवीरः च भवतः सहचरैः बद्ध्वा आनीतौ चेत् समीचीनम् अभविष्यत्। यतः मम भवतः वा यदि अपायः




आगच्छेत् तर्हि ताभ्याम् एव। अन्यः कोऽपि विरोधस्य नाम अपि स्मर्तुं न शक्नोति'' इति उक्तवान् चित्रसेनः।

''महाराज! तौ वराकौ अस्मान् वञ्चयित्वा कथम् अपि पलायनं कृतवन्तौ। किन्तु एतस्मिन् अरण्ये तौ दीर्घकालं यावत् रहस्यरूपेण स्थातुं न शक्नुतः। अद्य आरभ्य मम सेवकेषु अर्धात् अधिकाः तयोः अन्वेषणं करिष्यन्ति। तयोः ग्रहणभारः मम उपरि भवतु'' इति उक्तवान् उग्राक्षः।

'नागवर्मा करवीरः च पुनः सजीवं लभ्येते' इति अमरपालस्य विश्वासः नास्ति। यतः सः पूर्वं व्याघ्रचर्मधारिषु अन्यतमः सन् तेषां अन्तर्बाह्यस्वरूपं सम्यक् जानाति। अतः सः निराशया चित्रसेनम् उक्तवान्—

''महाराज! एतावता एव ताभ्याम् एषः अरण्यप्रान्तः अतिक्रान्तः स्यात्। पूर्वसमुद्रस्थं ज्वालाद्वीपं प्रति तौ प्रयाणम् आरब्धवन्तौ स्याताम् इति मम भावना'' इति। चित्रसेनस्य मनसि अपि एषः सन्देहः आसीत् एव। अतः सः मौनं शिरः चालितवान्।

उग्राक्षः चित्रसेनादीन् नमस्कृत्य अरण्यस्थं स्वदुर्गं प्रति अनुचरैः सह प्रस्थितवान्।

अनन्तरं द्वित्राः मासाः अतीताः। राज्ये तत्र तत्र लुण्ठनं गृहज्वालनम् इत्यादयः गणनीयप्रमाणेन प्रवृद्धाः इति वार्ता गुप्तचरद्वारा आगता। 'एतादृशं कृत्यं सुशिक्षिताः, सर्वाः आपदः सम्मुखीकर्तुं सिद्धाः च दुष्टाः कुर्वन्तः सन्ति' इत्यपि ज्ञातम्। ते दुष्टाः अरण्यमार्गस्य पार्श्वे, पर्वतखाते च निवसन्तः प्रयाणिकान् लुण्ठयन्ति स्म। अकस्मात् ग्रामस्य उपरि आक्रमणं कृत्वा यत् लब्धं तत् स्वीकृत्य ते पलायनं कुर्वन्ति स्म। ये विरोधम् आचरन्ति तान् निर्दयं मारयन्ति स्म। ग्रामीणाः समूहरूपेण विरोधम् आचरन्ति चेत् ग्रामम् एव भस्मसात् कुर्वन्ति स्म।

एतावता तेषु दुष्टेषु कोऽपि सजीवं न बद्धः। यतः ते सदा समूहरूपेण एव तिष्ठन्ति स्म। कोऽपि समूहात् पृथग्भूय, व्रणितःसन् वा भटानाम् अधीनः भवति चेत् सः तत्क्षणे एव विषौषधं स्वीकृत्य प्राणान् त्यजति।

अतः तेषा लुण्टाकानां नायकः कः? वसतिः कुत्र? इत्यादयः विषयाः अज्ञाताः एव आसन्। गुप्तचराः अपि एतत्प्रकरणे विशेषविषयान् सङ्ग्रहीतुम् असमर्थाः आसन्। इदानीं किं करणीयम् इति चित्रसेनः बहुधा चिन्तयति।

एतस्याः समस्यायाः परिहारार्थं चित्रसेनः एकम् उपायम् आश्रितवान्। यत्र प्रदेशे लुण्ठनादिकं प्रवर्तते तत्र प्रतिग्रामं स्वसेवकान् सम्प्रेष्य उद्घोषणं कारितवान् यत् ये एतावत्पर्यन्तं लुण्ठनं कृतवन्तः तान् महाराजः क्षाम्यति, ते यदि आयुधसहितं कपिलपुरम् आगच्छेयुः तर्हि तेषु एकैकः अपि कृषियोग्यां भूमिं प्राप्स्यति इति।




चित्रसेनस्य एषः दूरदर्शितापूर्णः उपायः फलितः। एकसप्ताहाभ्यन्तरे पञ्चाशत् लुण्टाकाः खड्गच्छुरिकादिभिः सह कपिलपुरम् आगतवन्तः। यदा ते राजभवनस्य प्राङ्गणे सम्मिलिताः तदा चित्रसेनः नूतनतया सेनापतिस्थाने नियुक्तेन अमरपालेन सह तत्र आगतवान्। अमरपालः लुण्टाकेषु बहूनां परिचयं प्राप्तवान्।

सः चित्रसेनम् उक्तवान्– "महाराज! एतेषु बहवः द्रोहिणः नागवर्मणः सैनिकाः एव। एतेभ्यः यदि पौराधिकारम् दद्मः तर्हि अनिष्टम् एव सम्भवेत् किल?" इति।

चित्रसेनः उत्तरं किमपि न दत्तवान्। स्वयंप्रेरणया शरणागतानां तेषां लुण्टाकानां समीपं गत्वा– "भवद्भिः सत्यं वक्तव्यम्। नागवर्मा भवतः अत्र प्रेषितवान् खलु? सः इदानीं कुत्र अस्ति?" इति पृष्टवान्।

"महाराज! अस्माकं नायकः इति कोऽपि नास्ति इदानीम्। भवान् यथा तर्कितवान् तथा वयं पूर्वं नागवर्मणः सैनिकाः आस्म इति तु सत्यम् एव। किन्तु अस्माकम् उपरि राक्षसानाम् आक्रमणं यदा जातं, तदा वयं सर्वे पलायनं कृतवन्तः। अनन्तरम् अद्यावधि नागवर्मणः नामापि न श्रुतवन्तः। वयम् इदानीं तं विस्मृतवन्तः। एषा हि वस्तुस्थितिः" इति उक्तवान् लुण्टाकप्रमुखः।

"भवतां वचनेषु कथं वा विश्वासं स्थापयामि?" इति पुनः पृष्टवान् चित्रसेनः।

"ये स्वयंप्रेरणया शरणम् आगच्छन्ति



तेभ्यः नागरिकाधिकारः कृषियोग्या भूमिः च दीयते इति प्रकटनं श्रुत्वा वयम् अत्र आगतवन्तः। उदरपूरणार्थं मार्गान्तराभावात् वयं लुण्ठनमार्गम् अनुसृतवन्तः, तावदेव। अस्माकम् अपराधाः क्षन्तव्याः प्रजावात्सल्येन द्रष्टव्याः च इति वयं प्रार्थयामः। इतोऽप्यधिकं किमधिकं वदामः वयम्?" इति उक्तवान् सः लुण्टाकप्रमुखः।

"अस्तु नाम, भवतां वचने विश्वस्य कृषियोग्यां भूमिं भवद्भ्यः ददामि। किन्तु भवन्तः पञ्चाशत् जनाः केवलम् आगतवन्तः। अवशिष्टानां का वा कथा?" इति पृष्टवान् चित्रसेनः।

"क्षमादानपूर्वकं पौराधिकारदानेन भूमिदानेन च भवान् अनुगृहीतवान् इति वार्ता यदा ज्ञायते तदा ते अपि शरणम् आगमिष्यन्ति महाराज!" इति उक्तवान् लुण्टाकप्रमुखः।

तदा अमरपालः चित्रसेनस्य कर्णे रहसि– "महाराज! एतेषां वचनेषु झटिति विश्वासः न स्थापनीयः। द्रोही नागवर्मा एतान् एवम् अभिनेतुं प्रेरितवान् स्यात् अपि। एषः सन्देहः यावत् न परिहृतः भवेत् तावत् एतेषां कारागारे स्थापनम् उचितम् इति मम अभिप्रायः" इति उक्तवान्।

"एवं करणम् उचितं न भवेत्। अहं वचनभ्रष्टः भवितुं न इच्छामि। यदि एतान् अहं कारागारे स्थापयेयं तर्हि मम वाग्दानस्य किं महत्त्वम् अवशिष्टम्?" इति मन्दस्वरेण एव अमरपालं पृष्टवान् चित्रसेनः।

"एवं तर्हि एकं निमेषं तिष्ठतु। लघुभीतिं प्रदर्श्य एतेषां परीक्षां करोमि" इति मन्दस्वरेण उक्त्वा लुण्टाकसमीपं गतवान् अमरपालः। "नागवर्मणः, ज्वालाद्वीपनायकस्य करवीरस्य च वार्तां भवत्सु केचन वा जानीयुः एव इति अस्माकं महाराजस्य अभिप्रायः। ये एतां वार्तां जानन्ति ते स्वयम् अङ्गीकुर्वन्तु। अन्यथा सर्वे चित्रहिंसया पीडिताः भवेयुः" इति कठोरस्वरेण उक्तवान् सः।

अमरपालस्य वचनं श्रुत्वा लुण्टाकप्रमुखः बद्धां मुष्टिं पुरतः प्रसारितवान्। तम् अनुसरन्तः अन्ये लुण्टाकाः अपि मष्टिं पुरतः

प्रसार्य स्थितवन्तः। तदा लुण्टाकनायकः दृढस्वरेण उक्तवान्– "महाप्रभो! वयं सर्वं सोढुं सिद्धाः भूत्वा एव अत्र आगताः। अस्माकम् एतां मुष्टिं पश्यतु। अत्र क्षणमात्रेण प्राणहरणसमर्थं कालकूटविषम् अस्ति। भवतः सैनिकाः अस्मान् स्पृशन्ति चेत् वयम् एतत् विषं संसेव्य प्राणान् त्यजामः। नागवर्माणं, करवीरं वा वयं सर्वथा न जानीमः इति तु सत्यम्" इति।

प्राणत्यागार्थम् अपि सिद्धानां तेषां दृढनिश्चयस्य श्रवणेन 'एते नागवर्म-करवीराभ्यां प्रेरिताः न' इति विश्वासः उत्पन्नः चित्रसेनस्य मनसि। सः तान् पश्यन् मन्दहासपूर्वकम्– "अस्तु तावत्, अद्य आरभ्य भवन्तः मम पौराः। राजधान्याः समीपे एव भवद्भ्यः कृषियोग्यां भूमिं दापयामि। इतःपरं न्यायेन मार्गेण सुखं जीवन्तु" इति उक्तवान्।

एतस्य श्रवणेन लुण्टाकानां समूहे हर्षतरङ्गाः समुत्पन्नाः। 'चित्रसेनमहाराजः जयतात्' इति ध्वनिः चतसृषु दिक्षु प्रतिध्वनितः अभवत्।

'लुण्ठनादिकं ये कृतवन्तः तान् अपि उदारभावनया क्षान्त्वा चित्रसेनः तेभ्यः कृषिभूमिं दत्तवान्। यथा पर्वम् उद्घोषणं कारितं तथैव आचरितवान् सः' इति वार्ता सर्वत्र प्रसृता। एतस्य परिणामतः चित्रसेनस्य कीर्तिः प्रवृद्धा, तेनैव सह सर्वे लुण्टाकाः अपि राजधानीम् आगत्य शरणं गतवन्तः।




एवं एका समस्या तु उपायेन परिहृता। तथापि चित्रसेनस्य शान्तिः नास्ति। सः चिन्तयति– "लुण्टाकानां पीडा तु यशस्वितया परिहृता। किन्तु द्रोही नागवर्मा कुत्र गतः इति अद्यावधि न ज्ञातं किल? सः जीवितः तु स्यात् एव। किन्तु कुत्र? अमरपालः वदति– 'सः करवीरेण सह ज्वालाद्वीपं गतवान्' इति। तथा चेदपि पुनः शक्तिं सम्पाद्य सः राक्षसपक्षिभिः सह आक्रमणं करिष्यति एव।"

एवम् एकत्र नागवर्मणः आक्रमणस्य चिन्ता। अपरत्र अन्या एव चिन्ता। यतः इदानीं कान्तिमती गर्भिणी। जायमानम् अपत्यं पुमान् वा भवतु स्त्री वा भवतु, पञ्च वर्षाणि लालयित्वा अनन्तरकाले राक्षसाय उग्राक्षाय दातव्यं किल?



भवन्ति। अत्रान्तरे एका विचित्रा वार्ता आगता यत् रात्रिसमये आकाशे तत्र तत्र अग्निज्वालागोलकानि उड्डयन्ते इति। चित्रसेनः अपि एतां वार्तां श्रुतवान्। गूढचराः विशेषपरिश्रमेण चतसृभ्यः दिग्भ्यः वार्ताम् आनीतवन्तः यत् आकाशे उड्डयमानाः अग्निपक्षिणः एव इति।

नूतनया समस्यया चित्रसेनः चिन्ताक्रान्तः। एतस्मिन् एव सन्दर्भे राजकुमारस्य पञ्चमं वर्षं पूर्णम्। अनन्तरं दिनद्वयाभ्यन्तरे उग्राक्षः राजधान्याः पुरतः प्रत्यक्षम् अभवत्।

"महाराज! अहम् उपस्थितोऽस्मि। कुत्र अस्ति राजकुमारः?" इति पृष्टवान् उग्राक्षः।

"आगच्छतु उग्राक्ष! कुमारः इदानीम् अत्र आगमिष्यति। नूतनैः वस्त्रैः तम् अलङ्कुर्वन्तः सन्ति। किञ्चित् प्रतीक्षां करोतु" इति उक्तवान् चित्रसेनः।

चित्रसेनस्य मुखे पुत्रवियोगदुःखस्य छायामपि अदृष्ट्वा उग्राक्षः आश्चर्यचकितः। "प्रथमं पुत्रम् एव निर्विकारभावनया राक्षसाय मह्यम् अर्पयति किल एषः! प्रशंसार्हम् एतस्य मनोदार्ढ्यम्। अथवा एतस्य पुत्रः पङ्गुः अन्धः मूकः वा न स्यात् किल?"

एवम् उग्राक्षः बहुधा चिन्तयन् आसीत्। तदा दास्यः पुष्टम् आरोग्यवन्तं बालकम् आनीय उग्राक्षस्य पुरतः स्थापितवन्तः।

एवम् एव मासाः अतीताः। राज्ञी कान्तिमती कस्मिंश्चित् उषःकाले पुत्रं प्रसूतवती। एतां शुभवार्तां श्रुत्वा नागरिकाः मुदिताः। राजधान्यां विशेषोत्सवः आचरितः। मन्दिरेषु विशेषपूजाः प्रवृत्ताः।

अस्मिन् एव सन्दर्भे राक्षसेश्वरः उग्राक्षः अपि राजधानीम् आगत्य अन्तःपुरे स्थितं शिशुं दूरतः एव दृष्ट्वा सन्तोषं प्रकटयन् बालः इव करताडनपूर्वकं नृत्यं कृतवान्।

"महाराज! इतः पञ्चानां वर्षाणाम् अनन्तरम् एषः कुमारः मदीयः भविष्यति" इति उक्तवान् उग्राक्षः। चित्रसेनः अङ्गीकारभङ्ग्या मौनं शिरः चालितवान्।

कालः कदापि न तिष्ठति किल? नियतेन वेगेन सः सदा गच्छति। वर्षाणि अतीतानि

बालकः उग्राक्षं दृष्ट्वा– "एषः एव वा सः राक्षसः, यश्च इतःपरं मम रक्षकः भविष्यति?" इति वाचा स्खलन् पृष्टवान्।

"आं भोः" इति उक्तवत्यः दास्यः।

'बालकाय पूर्वम् एव विषयं निवेद्य एते मम आकार-स्वभावादिविषयिणीं भीतिं निवारितवन्तः सन्ति। युक्तम् एव जातम्' इति भावयन् उग्राक्षः सन्तोषेण करताडनं कृत्वा– "आगच्छतु वत्स!" इति बालम् आहूय स्वस्कन्धे उपवेशितवान्।

"महाराज! दत्तं वचनं पालितवान् भवान्। भवतः उपकारं सदा स्मरामि" इति उक्त्वा उग्राक्षः ततः गत्वा दुर्गद्वारम् अतिक्रम्य अरण्यं प्रविष्टवान्।

अरण्ये गमनसमये उग्राक्षस्य स्कन्धे उपविष्टः बालकः– "भोः राक्षसतात! तत्र वृक्षस्य अधः स्थितः दण्डः समीचीनः अस्ति, स च मह्यम् अपेक्षितः" इति उक्तवान्।

उग्राक्षः बालकम् अवतार्य दण्डम् आनीय तस्य हस्ते यच्छन् पृष्टवान्– "भवान् एतेन दण्डेन किं करोति?" इति।

तदा सः बालः मुग्धस्वरेण उक्तवान्– "पाकशालायाः अन्तः शुनक-मार्जार-कुक्कुटादयः यथा न प्रविशेयुः तथा तान् एतेन दण्डेन ताडयामि" इति।

एतत् श्रुत्वा उग्राक्षः क्षणकालं स्तब्धः। 'राजकुले जातः राजकुमारः पाकशालायाः समीपे आगतान् शुनक-कुक्कुटादीन् निवारयति इत्यस्य कः अर्थः?'

"बाल! भवतः पिता किं करोति?" इति सन्देहेन पृष्टवान् उग्राक्षः।

"मम पिता पाकविद्यायां निपुणः। सः पाकशालायाम् अन्नव्यञ्जनादीनि, रुचिकराणि भक्ष्य-भोज्यादीनि च करोति" इति उक्तवान् सः बालकः।

"हा हन्त! कीदृशी वञ्चना एषा! पाचकस्य पुत्रं राजकुमारः इति मह्यम् अर्पितवन्तः एते! प्रदर्शयामि मम कोपम्" इति वदन् उग्राक्षः रौद्ररूपं धृत्वा वेगेन कपिलपुरदुर्गं प्रति प्रस्थितः। (अनुवर्तते)






# स्वयंप्रकाशिता

वेतालग्रहण श्मशानगमनं च नित्यकर्मसु अन्यतमम् इति भावयन् त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् च।

तदा शवान्तर्गतः वेतालः मौनवातावरणं भञ्जयन् अवदत्– "अये राजन्! एकस्य कार्यस्य साधनार्थं भवता क्रियमाणः परिश्रमः अपूर्वः एव। अत्र प्रश्नः एव नास्ति। किन्तु महता परिश्रमेण अनेकानि कष्टनष्टानि सोढ्वा कृतं कार्यम् अपि कदाचित् व्यर्थं भविष्यति, तत्कारणतः जनानां पुरतः मुखभङ्गः प्राप्तव्यः अपि भवेत्। अत्र उदाहरणरूपेण सुनन्दस्य कथां श्रावयामि। तस्याः श्रवणेन भवान् अपि विवेकं प्राप्नुयात्। अथवा मार्गायासपरिहारः तु अस्ति एव, मद्भारवहने श्रमः अपि न अनुभूयेत" इति।

अनन्तरं वेतालेन कथा आरब्धा–

"पर्वं ज्वालामुखदेशं जलन्धरः नाम



राजा पालयन् आसीत्। सः धर्मे श्रद्धावान्। व्यवहारेण सरलः, जनानाम् आदर्शः च। किन्तु दौर्भाग्यवशात् पूर्वजन्मनः पापशेषवशात् वा तस्य पुत्रसन्तानं न आसीत्। एका एव कुमारी तस्य। तस्याः नाम सुचरिता।

पुत्राभावकारणतः जलन्धरः सुचरितां पुत्रम् इव पालितवान् आसीत्। सा शस्त्राभ्यासेषु निपुणा। गुरुमुखात् राजतन्त्राणि अपि अधीतवती आसीत्। युद्धाभ्यासे सा अतीव चतुरा। एवं महामेधाविनी सा राज्यपालनविषये पितुः साहाय्यम् आचरन्ती पितुः पुत्राहित्यदुःखं दूरीकृतवती आसीत्। सा राज्यपालनस्य सर्वान् व्यवहारान् सर्वाणि राजतन्त्राणि च जानाति स्म।

एवं स्थिते एकदा जलन्धरः केनचित् विचित्रेण रोगेण पीडितः अभवत्। अन्नपानादिषु इदानीं तस्य निरासक्तिः। वेदनया सः दिने दिने कृष्णपक्षस्य चन्द्रः इव क्षीणः सञ्जातः।

आस्थानवैद्यानां सर्वे परिश्रमाः जले होमाचरणम् इव व्यर्थाः सञ्जाताः। अन्यप्रदेशेभ्यः समागताः महावैद्याः अपि असहायकतां प्रकटितवन्तः।

पितुः परिस्थितिं दृष्ट्वा व्याकुलिता सुचरिता महामन्त्रिणा सह समालोचनं कृतवती। पितुः अनुमतिं प्राप्य अन्तिमप्रयत्नरूपेण उद्घोषणं कारितवती यत् महाराजस्य व्याधिं यः निवारयति तस्मै अर्धराज्यं दीयते इति।

किन्तु एतेनापि किमपि प्रयोजनं न सिद्धम्। प्रकटनं श्रुत्वा बहवः वैद्याः योगिनः च राजप्रासादम् आगतवन्तः। कषाय-भस्म-मूलादिभिः ते चिकित्सां यत् कृतवन्तः तत्सर्वं सर्वथा निष्फलम् एव जातम्। महाराजस्य परिस्थितिः तु पूर्वापेक्षया विषमिता जाता।

राजधान्याः समीपे एव कस्मिंश्चित् ग्रामे सुनन्दः नाम निर्धनः युवकः आसीत्। सः सर्वथा अनाथः। प्रतिदिनं भोजनार्थम् अपि तेन इतरेषां पुरतः हस्तः प्रसारणीयः भवति स्म। तस्य एतादृशीं परिस्थितिं दृष्ट्वा तस्मै कन्यां दातुं कोऽपि न उत्सहते।

मातापित्रोः, बान्धवानाम् आत्मीयानां वा




प्रीतेः अभावतः सः जीवनात् एव जुगुप्सितः अभवत्। 'मम जीवने न किमपि प्रयोजनं नास्ति, इदानीम् आत्महत्या एव शरणं मम' इति चिन्तयन् युवकः ग्रामसमीपे स्थितं पर्वतं प्रति गतवान्।

सः पर्वतस्य शिखरं गत्वा पार्श्वस्थे खाते पतनार्थं यदा उद्युक्तः तदा "तिष्ठतु भोः" इति भीकरं गर्जनं श्रुतवान्।

आश्चर्यचकितः सुनन्दः तत्रैव स्थितवान्। राक्षसः कश्चन तस्य समीपम् आगत्य— "किं भोः, आत्महत्यार्थं प्रयत्नं कुर्वन् अस्ति वा? किमर्थम्? किं प्रवृत्तम्?" इति पृष्टवान्।

मरणार्थम् उद्युक्तस्य राक्षसात् का भीतिः? सुनन्दः धैर्येण स्वकीयां दुःस्थितिं निवेद्य— "मरणात् अन्यः मार्गः नास्ति मम" इति उक्तवान्।

तदा राक्षसः हसन्— "अहं बहुभ्यः वर्षेभ्यः अत्र निवसामि। अद्यावधि कोऽपि आत्महत्यार्थम् अत्र न आगतवान्। अस्मिन् स्थाने भवतः मरणार्थम् अवकाशं न ददामि अहम्" इति उक्तवान्।

"मम दीनां परिस्थितिं श्रुत्वा अपि एवं वदति किल? अहं ग्रामं तु न प्रतिगच्छामि। भवान् आत्महत्यार्थम् अवकाशं वा ददातु, अथवा मां खादतु। दुर्बलं मां भवान् खादितुम् अपि न इच्छति इति भाति" इति उक्तवान् सुनन्दः।

क्षणकालम् आलोच्य राक्षसः उक्तवान्— "भोः, मरणं सर्वथा अनुचितम्। अहं भवते जीवनमार्गं प्रदर्शयामि। एतस्य देशस्य राजा जलन्धरः विचित्रेण व्याधिना पीड्यमानः अस्ति। 'यः व्याधिं निवारयति तस्मै अर्धं राज्यं दीयते' इति उद्घोषणं कृतम् अस्ति। अहं यद्यपि गन्तुं सिद्धः, किन्तु राक्षसस्वरूपकारणतः न गतवान्। महाराजस्य व्याधेः निवारकस्य औषधस्य रहस्यं भवते सूचयामि।

सौगन्धिका नाम मूलं सम्यक् पेषयित्वा जम्बीररसेन योजनीयम्। तच्च अञ्जलिप्रमाणकं दिने त्रिवारं महाराजाय सेवनार्थं दातव्यम्। तेन राज्ञः रोगः तद्दिने एव किञ्चित् शाम्यति। अनन्तरं दिने एकवारं त्रिदिनं यावत् दत्तं चेत् पर्याप्तम्। सौगन्धिकामूलम् अत्रैव उपलभ्यते। अहम्



एव आनीय ददामि। महाराजस्य व्याधि निवार्य अर्धराज्यं सम्पाद्य सुखेन जीवतु भवान्" इति।

एतेन प्रस्तावेन सन्तुष्टः सुनन्दः राक्षसेन दत्तं सौगन्धिकामूलं स्वीकृत्य राजधानीं गतवान्। अल्पेन एव प्रयत्नेन सः महाराजस्य दर्शनं प्राप्तवान्।

राक्षसस्य सूचनानुगुणं मूलं पेषयित्वा जम्बीररसेन योजयित्वा महाराजाय पानार्थं दत्तवान्। महाराजः तद्दिने श्रद्धया त्रिवारम् औषधं सेवितवान्। अत्याश्चर्यं यत् अनन्तरदिने एव उपशमनस्य लक्षणानि स्पष्टं दृष्टानि। पुनः दिनत्रयं यावत् औषधस्य सेवनेन महाराजः सम्पूर्णं स्वस्थः। यथापूर्वं सः सर्वाणि कार्याणि कर्तुं समर्थः सञ्जातः।

दिनत्रयस्य औषधोपचारानन्तरं सुनन्दः महाराजम् एकान्ते दृष्ट्वा निवेदितवान्— "महाराज! अर्धराज्यं मह्यम् इदानीं मास्तु। केषुचित् दिनेषु अहं भवतः दर्शनं पुनः करिष्यामि। तदा एव राज्यभागं स्वीकरिष्यामि" इति।

ततः प्रस्थानसमये सः महाराजस्य सकाशात् किञ्चित् धनं स्वीकृतवान्। अनन्तरं ततः निर्गत्य कस्यचित् गुरोः सकाशात् सर्वाः विद्याः सम्यक् अधीतवान्। महाराजतः यत् धनम् आनीतम् आसीत् तत् विद्याभ्यासार्थम् इतरव्ययार्थं च उपयुक्तम् अभवत्।

एतस्मिन् अवधौ राजोचितं युद्धविद्याम् अपि सः अभ्यस्तवान्। विशेषश्रद्धया पठितवान् इति कारणतः सुनन्दः अल्पे एव काले राजोचितासु सर्वासु विद्यासु समर्थः जातः।

अनन्तरं सुनन्दः वेषान्तरेण गत्वा ज्वालामुखीदेव्याः नवरात्रोत्सवे भागं गृहीतवान्। तस्मिन् सन्दर्भे महाराजस्य सम्मुखे विविधासु युद्धविद्यासु विद्वत्तासु च बह्व्यः स्पर्धाः प्रचलन्ति। सुनन्दः तासु स्पर्धासु जयन्तनाम्ना भागम् ऊढ्वा बहूनि पारितोषिकाणि जनानां प्रशंसावचनानि च प्राप्तवान्।

उत्सवसमाप्तेः अनन्तरं सुनन्दः राजसमीपं गत्वा आत्मनः परिचयम

उक्तवान्। तत् श्रुत्वा राजा आश्चर्यचकितः सन्तुष्टः च।

तदा सुनन्दः विनयेन उक्तवान्– "महाराज! स्पर्धायां मया प्रदर्शितेन शौर्येण विद्याकौशलेन च भवान् नितरां सन्तुष्टः इति विश्वसिमि। भवान् पूर्वं मह्यम् अर्धं राज्यं दातुं सिद्धः आसीत्। इदानीम् अहं तत्स्थाने अन्यत् एव प्रष्टुम् इच्छामि" इति।

"का सा इच्छा भवतः?" इति पृष्टवान् महाराजः।

"यदि राजकुमारी सुचरिता इच्छेत् तर्हि अहं तां परिणेतुम् इच्छामि" इति उक्तवान् सुनन्दः।

तदा जलन्धरः आश्चर्येण पृष्टवान्– "यदि सा एतं प्रस्तावं तिरस्कुर्यात् तर्हि?" इति।

"तदा अहम् अर्धं राज्यम् अपि त्यक्त्वा इतः मौनं निर्गच्छामि" इति उक्तवान् सुनन्दः।

'सुनन्दः सुचीरतायां प्रीतिमान्, उत सः ज्वालामुखीराज्यस्य सार्वभौमत्वम् एव इच्छति?' इति विवेक्तुं न शक्तवान् जलन्धरः। 'एतां समस्यां सुचरिता एव परिहरतु' इति चिन्तयित्वा राजा सुनन्दं पुनः आगन्तुं सूचितवान्।

पितुः मुखतः प्रवृत्तं सर्वं ज्ञात्वा सुचरिता उक्तवती– "सत्यं, सुनन्दस्य मनसि किं स्यात् इति अहम् अपि न ज्ञातवती। अहम् एव तेन सह वार्तालापं करिष्यामि। सः श्वः



मां पश्यतु" इति।

अनन्तरदिने सुनन्दः अन्तःपुरं प्रविश्य सुचरितायाः पुरतः स्थितवान्। तदा सुचरिता सुनन्दं पृष्टवती– "महोदय! अहं भवन्तं किञ्चित् प्रष्टुम् इच्छामि। भवान् सूर्यस्य इव गौरवम् इच्छति, उत चन्द्रस्य इव?" इति।

सुनन्दः क्षणकालम् आलोच्य उक्तवान्– "राजकुमारि! मां क्षाम्यतु। अहं सूर्यः इव जीवितुम् इच्छामि। तस्य गौरवम् एव श्रेष्ठम्" इति। अनन्तरं शिरः अवनमय्य ततः निर्गतवान्।

वेतालः एवं कथां समाप्य– "अये, राजन्! महता श्रमेण कालव्ययेन च सुनन्दः राजोचितासु विद्यासु नैपुण्यं सम्पादितवान्। तथापि सः किमर्थम् अर्धं राज्यं

तिरस्कृतवान्? किमर्थं स: सुचरितायाः परिणयविषये इच्छां प्रकटितवान्? सुचरितायाः प्रश्नस्य उत्तररूपेण अहं सूर्यस्य इव जीवनक्रमम् इच्छामि इति स: उक्तवान्। यदा राजत्वं प्राप्यते तदा एव सूर्य इव तेजस्वी भवेत् खलु? तथापि स: किमर्थं राजपदवीं तिरस्कृतवान्? एतेषां सन्देहानाम् उत्तरं जानन् अपि यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति उक्त्वा मौनम् आश्रितवान्।

तदा त्रिविक्रमः एवम् उक्तवान्– "यः राजा भवितुम् इच्छति तेन राजोचिताः विद्याः केवलं सम्पादिताः चेत् न पर्याप्तम्। राजनीतयः, विविधानि तन्त्राणि, मन्त्रालोचनकलाः च तेन ज्ञातव्याः। समये प्राप्ते, प्रतितन्त्रम् आयोजयितुम् अपि सामर्थ्यम् अपेक्षितम्। सुनन्दः एतादृशान् राजधर्मान् सुतरां न जानाति। किन्तु राजवैभवं त्यक्तुम् अपि तस्य मनः सुलभतया न अङ्गीकरोति।

सुचरितायाः साहाय्येन आत्मनः लोपः गोपयितुं शक्येत इति सुनन्दस्य अभिप्रायः। अतः एव सः तां परिणेतुम् इष्टवान्। सुचरिता प्रश्नद्वारा सूर्यस्य स्वयंप्रकाशत्वं तेजोवत्वं च, चन्द्रस्य च पराधीनप्रकाशत्वं सूचितवती। तदा सुनन्दः स्वकीयं पराधीनप्रकाशत्वं ज्ञातवान्।

सुचरिता स्वप्रश्नेन एव 'स्वयंप्रतिभारहितम् अहं परिणेतुम् न इच्छामि' इत्यपि सूचितवती। 'स्वतेजसा स्वबुद्धिबलेन च स्वयंप्रकाशिता साधनीया। परावलम्बनेन कीर्तिसम्पादनं न उचितम्' इति नीतिः अपि आसीत् तस्याः प्रश्ने। एतत्सर्वं बुद्धिमान् सुनन्दः क्षणाभ्यन्तरे ज्ञातवान्। अतः एव सः स्वविद्याबलेन उचितः उद्योगः सम्पादनीयः इति निश्चित्य, स्वयोग्यतानुगुणं जीवनं यापयितुम् इच्छन् ततः निर्गतवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः शवसहितम् अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# दर्पणः

बहुपूर्वं चीनादेशे कस्मिंश्चित् कुग्रामे वांग्नामकः कश्चित् निवसति स्म। तं ग्रामं गन्तुं मार्गः एव न आसीत्। तद्ग्रामीणाः सर्वे अतीव सरलाः निष्कपटिनः च।

एकदा प्रातःकाले वांग् अङ्गारपात्रं स्कन्धे आरोप्य नगरं प्रति प्रस्थितः। नगरे अङ्गारस्य विशेषमूल्यम् इति सः श्रुतवान् आसीत्। किन्तु वांग् अद्यावधि स्वग्रामपरिसरम् अतिक्रम्य कुत्रापि न गतवान् आसीत्।

पतिं प्रेषयितुं ग्रामसीमापर्यन्तम् आगता तस्य पत्नी उक्तवती– "आगमनसमये मह्यम् एकां कङ्कतिकाम् अपि आनयतु", इति। "कङ्कतिका!" इति उद्गारं प्रकटितवान् वांग्। यतः सः अद्यावधि 'कङ्कतिका' इति नाम न श्रुतवान् आसीत्। तेषु दिनेषु चीनादेशस्य स्त्रियः केशप्रसाधनार्थं यस्याः कङ्कतिकायाः उपयोगं कुर्वन्ति स्म सा काष्ठनिर्मिता वक्राकारका च भवति स्म। स्त्रियः केवलं तां जानन्ति स्म।

तस्य पत्नी पूर्वदिशि आकाशे दृश्यमानं क्षीणचन्द्रं प्रदर्श्य– "पश्यतु, कङ्कतिका स इव भवति" इति उक्तवती।

चतुर्णां दिनानां प्रयाणेन वांग् नगरं प्राप्तवान्। नगरे द्वित्राणि दिनानि स्थित्वा आनीतान् अङ्गारान् युक्तेन मूल्येन विक्रीतवान्। रात्रौ यदा नगरमार्गे गच्छन् आसीत् तदा सः पत्न्या वचनं स्मृतवान्। किन्तु सः तया सूचितं नाम न स्मरति। सा तु 'आकाशे यत् दृश्यते तत् इव अस्ति' इति उक्तवती आसीत् किल? अतः वांग् आकाशं दृष्टवान्। तत्र चन्द्रः दृश्यते स्म। वांग् झटिति आपणं प्रविष्टवान्। आपणस्थे दर्पणे सः चन्द्रबिम्बं दृष्टवान्। 'पत्न्या एतत् एव आनेतुम् उक्तम्' इति भावयन् सः, आपणिकः यावत् मूल्यं वदति तावत् दत्त्वा

"चीनदेशस्य जानपदकथा"

दर्पणं क्रीत्वा स्वग्रामं प्रति प्रस्थितवान्।

दिनचतुष्टयस्य प्रयाणेन वांग् गृहं प्राप्तवान्। गृहम् आगत्य वाणिज्यस्य विवरणं पत्न्यै वदन् आत्मना आनीतं वस्तु पत्न्याः हस्ते स्थापितवान्।

वांग् पत्नी अत्यादरेण आवरणरूपेण स्थापितं वस्त्रं निष्कास्य दर्पणम् उन्नीय दृष्टवती। तत्र सा स्वप्रतिबिम्बं दृष्टवती। सा इतः पूर्वं दर्पणस्य नाम अपि न श्रुतवती किल? अतः सा चिन्तितवती यत् मम पतिः नगरात् अपरां पत्नीम् आनीतवान् इति

रुदती सा मातृगृहं गत्वा स्वमातुः हस्ते दर्पणं दत्त्वा उक्तवती– "पश्यतु अम्ब! मम दौर्भाग्यं यत् भवत्याः जामाता नगरतः अन्यां पत्नीम् आनीतवान् अस्ति" इति।

तस्मिन् प्रदेशे इतःपूर्वं कोऽपि दर्पणं न दृष्टवान् आसीत्। अतः सा माता दर्पणे स्वप्रतिबिम्बं दृष्ट्वा– "अरे! किम् एतत्? भवत्सूचितया अन्यया पत्न्या सह काञ्चित् वृद्धाम् अपि आनीतवान् किल सः?" इति उद्गारं प्रकटितवती।

अत्रान्तरे तत्र पञ्चषाः स्त्रियः सम्मिलिताः। "एषः विषयः ग्रामाधिकारिणे निवेदनीयः" इति ताः सूचितवत्यः। ग्रामाधिकारी वांग्महोदयं, तस्य पत्नीं पत्न्याः मातरं च न्यायास्थानं प्रति आनाय्य सर्वेषां सम्मुखे दर्पणं परीक्षितवान्। तत्र स्वसदृशः अन्यः एव ग्रामाधिकारी तेन दृष्टः।

"अये! मम प्रतिस्पर्धिरूपेण अन्यम् एतम् आनीतवान् वा भवान्? कीदृशी वञ्चना एषा! अस्तु, भवन्तं सम्यक् दण्डयिष्यामि" इति उक्त्वा वादिपक्षीयान् प्रतिवादिपक्षीयान् च कशाप्रहारैः दण्डयितुं सेवकान् आदिष्टवान् सः ग्रामाधिकारी।

न्यायाधिकारिणः एतादृशव्यवहारेण सर्वे क्रुद्धाः। 'ग्रामाधिकारी असत्यं वदति' इति वदन्तः ते त्रिचतुराः अपि युगपत् एव दर्पणं स्वदिशि आकृष्टवन्तः। एवं परस्पराकर्षणकोलाहले दर्पणः भूमौ पतितः, शतधा भग्नः च। एतेन तेषां सर्वेषां कष्टानि अपि समाप्तानि।



अस्माकं देशस्य वैशिष्ट्यानि

# साञ्ची स्तूपः




मध्यप्रदेशराज्यस्य राजधान्याः भूपालनगरस्य समीपे साञ्चीपर्वताः सन्ति। तेषु पर्वतेषु क्रि.पू. ३ शतके अशोकचक्रवर्तिना निर्मिताः अनुपमाः बोद्धस्तूपाः परिदृश्यन्ते।




एतेषां स्तूपानां समीपे अतिप्राचीनं नगरम् अपि आसीत्। अशोकचक्रवर्तिनः कुमारः महेन्द्रः बौद्धमतप्रचारार्थं सिंहळद्वीपं प्रति गमनतः पूर्वं विदिशानद्याः समीपे किञ्चित्कालं ध्यानमग्नः आसीत्। तत्समये महेन्द्रस्य संरक्षणभारं तदीया माता निरूढवती।

तत्समये तत्र केवलम् एकः लघुस्तूपः आसींत्। अनन्तरकाले तत्र आगतः अशोकचक्रवर्ती तत्प्रदेशस्य प्रशान्तवातावरणेन आकृष्टः सन्, तत्र बौद्धारामान् निर्मातुं योजनां कृतवान्।





भवननिर्माणार्थं यानि शिल्पानि अपेक्षितानि तानि निर्मातुं विदिशानगरस्य शिल्पिनः नियुक्ताः। बुद्धजीवितसम्बन्धीनि, विविधकथासम्बन्धीनि च अपूर्वाणि शिलाशिल्पानि शिल्पिभिः निर्मितानि।

अनन्तरम् अल्पे एव काले स च प्रदेशः शतशः बौद्धभिक्षूणां निवासस्थानम् अभवत्। ते तत्र पठनं, ध्यानं, पारायणं च कुर्वन्तः सन्तोषेण आसन्। ज्ञानार्जनार्थं मनःशान्त्यर्थं च बहवः जनाः तत्र आगच्छन्ति स्म।






त्रयोदशशतकस्य अनन्तरं केनापि कारणेन बौद्धभिक्षवः तं प्रदेशं त्यक्त्वा गतवन्तः। कालान्तरे तानि भवनानि परितः तृणसस्यादयः तरुगुल्मादयः च प्रवृद्धाः। स च प्रदेशः अरण्यमयः जातः। महागुल्मैः आवृताः स्तूपाः जनानां दृष्टिक्षेत्रतः दूरङ्गताः अभवन्।

१८१८तमे वत्सरे आंग्लसेना पर्वतमार्गेण गच्छन्ती आसीत्। तत्समये सेनानायकः जनरल् टेय्लर् एतस्य प्रदेशस्य विचित्रम् आकारं दृष्ट्वा आश्चर्यम् अनुभूतवान्। पर्वतम् आरुह्य गुल्मान्तरितान् बौद्धस्तूपान् दृष्ट्वा अत्यानन्दितः अभवत्।





अनेकेषां संवत्सराणाम् अनन्तरम् अपूर्वाः एते स्तूपाः प्रकाशतां नीताः। प्रधानस्तूपतः सामान्यतः १० कि.मी. दूरे बुद्धस्य शिष्ययोः सारीपुत्रस्य मौद्गलायनस्य च अवशेषाः प्राप्ताः।

स्तूपं परितः चतसृषु दिक्षु अपूर्वशिल्पैः अलङ्कृतानि चत्वारि सिंहद्वाराणि सन्ति। द्विसहस्रवर्षेभ्यः पूर्वं निर्मितानि एतानि।





स्तूपस्य भित्तिषु बुद्धस्य जीवितकालस्य घटनाः, इतराणि अनेकानि चित्राणि च चित्रितानि सन्ति। एकस्मिन् चित्रे कश्चन वानरः बुद्धाय मधु यच्छन् अस्ति। अत्र बुद्धविग्रहः नास्ति, अपि तु बोधिवृक्षः अस्ति। विशाले सुन्दरे च प्रदेशे विराजमानः एषः साञ्चीस्तूपः भारतीयसंस्कृतेः प्रख्यापकम् अपूर्व शिल्पम्।



# नैजं स्वरूपम्

एकस्मिन् नगरे श्रीमुखनामकः कश्चित् महाधनिकः आसीत्। यदा सः चत्वारिंशद्वर्षीयः आसीत्, तदा तस्य पत्नी दिवङ्गता। तावत्पर्यन्तम् अपि तौ सन्तानहीनौ एव आस्ताम्। पत्न्याः उपरि धनिकस्य महती प्रीतिः आसीत्। श्रीमुखः ताम् एव निरन्तरं स्मरन्, पुनर्विवाहस्य आलोचनाम् अपि अकुर्वन् कालं यापितवान्। एवंप्रकारेण एव सः अशीतिवर्षीयः वृद्धः अभवत्।

तस्य गृहे गतविंशतिवर्षेभ्यः गोपालः मालवी च इति पतिपत्न्यौ श्रीमुखस्य सेवां कुरुतः स्म। तौ द्वौ अपि गृहस्य बाह्याङ्गणे निर्मिते कुटीरे वसन्तौ, स्वजनकस्य इव श्रीमुखस्य सेवां कुरुतः स्म।

एवं हि सति कस्मिंश्चित् सुदूरग्रामे स्थितः श्रीमुखस्य भागिनेयः नारायणः, तस्य पत्नी मालती च श्रीमुखं द्रष्टुम् आगत्य, तत्रैव कानिचन दिनानि स्थितवन्तौ। गच्छति काले तौ द्वौ अपि गोपालस्य मालव्याः च उपरि अनेकान् दोषान् आरोपितवन्तौ। तौ गृहकार्याणि सकाले समीचीनतया न कुरुतः, चौर्यं कुरुतः इत्यादिकं मिथ्यारोपं कृत्वा, श्रीमुखस्य मनसि दुर्भावनाम् उत्पादितवन्तौ।

पुनः पुनः नारायणस्य मालत्याः च मिथ्यावचनानि श्रुत्वा श्रुत्वा, तयोः वचनेषु श्रीमुखः विश्वासं प्राप्य, एकस्मिन् दिने गोपालं मालवीं च गृहं त्यक्त्वा गन्तुम् आज्ञापितवान्। तदारभ्य तस्य गृहस्य सम्पूर्णव्यवहाराः मालतीनारायणयोः अधीनाः अभवन्।

अनन्तरं तौ श्रीमुखं– "भवतः एतस्यां वृद्धावस्थायाम् अस्मत्सदृशानां बन्धूनां महती आवश्यकता अस्ति। भवतः सुखदुःखयोः आवां सहयोगं दद्वः" इति सम्यक् बोधितवन्तौ। सन्तानहीनः श्रीमुखः इतःपूर्वम् अपि स्वीयां सम्पत्तिं भागिनेयाय

"विवेकः"



नारायणाय एव दातुं निश्चितवान् आसीत्। इदानीं नारायणस्य मृदुभाषणेन भ्रान्तः सः स्वीयां सम्पत्तिं नारायणः एव यथा प्राप्नुयात् तथा मृत्युपत्रम् अपि लिखितवान्।

एवंरीत्या धनिकस्य सम्पत्तेः अपहरणम् एव मालतीनारायणयोः तत्र आगमनस्य मूलकारणम् आसीत्। अतः इदानीं तौ श्रीमुखस्य विचारे अश्रद्धां प्रदर्शयितुम् आरब्धवन्तौ। एषः वृद्धः शीघ्रातिशीघ्रं मरणं प्राप्नोतु इत्येव तयोः आशयः आसीत्।

श्रीमुखस्य यथाकालं भोजनप्राप्तिः अपि दुर्लभा अभवत्। प्राप्ते भोजने अपि श्रीमुखस्य अप्रियाः खाद्यपदार्थाः एव आसन्। श्रीमुखः पृच्छति चेत्, 'एते एव भवतः स्वास्थ्यकृते अनुकूलाः पदार्थाः' इति उत्तरं लभ्यते। एतेन कारणेन शीघ्रम् एव श्रीमुखः दुर्बलः व्याधिग्रस्तः च अभवत्।

एतस्याम् अवस्थायां श्रीमुखः स्वीयं वैद्यमित्रं कोदण्डपाणिं द्रष्टुम् इच्छन् गृहम् आगच्छतु इति वार्तां प्रेषितवान्। कोदण्डपाणिः आगत्य श्रीमुखं परीक्ष्य– "कतिदिनेभ्यः एषः ज्वरः भवन्तं बाधते? कदा आरभ्य एतत् पाणिपादकम्पनम्?" इति पृष्टवान्।

"दिनचतुष्टयात् महत् कष्टम् अनुभूतम्। इदानीं सोढुम् अशक्तः भूत्वा नारायणं प्रेषयित्वा भवन्तम् आनायितवान्" इति उक्तवान् श्रीमुखः।

आश्चर्यचकितः कोदण्डपाणिः– "किम् उक्तम्? दिनचतुष्टयात् भवतः एतादृशी अवस्था अस्ति! सर्वं पश्यन् अपि नारायणः तूष्णीं स्थितवान् वा? वैद्यमित्रं माम् अपि विस्मृतवान् वा?" इति पृष्टवान्।

श्रीमुखः किमपि वक्तुकामः एव आसीत्, तदा नारायणः द्वारम् उद्घाट्य तत्र आगतवान्– "एतस्मिन् समये औषधैः मातुलस्य किमपि प्रयोजनं भवेत् इति मम तु विश्वासः नास्ति। अस्माकं व्यर्थपरितापेन किं वा भवेत्?" इति उक्तवान् च।

कोदण्डपाणिः स्वमनसि उद्भूतं क्रोधं तत्रैव स्थगयन्, "बलवत्तरः मानवप्रयत्नः अपि अस्ति किल भो? पश्यामः!" इति उक्त्वा स्वीयपेटिकातः एकाम्

औषधकूपिकां गृहीत्वा– "श्रीमुख, इतःपर किमपि भयं नास्ति। एतत् औषधं दिने कतिवारं कियत्प्रमाणकं दातव्यम् इत्यादिकं सर्वं भवद्भागिनेयं तस्य पत्नीं च सूचयामि" इति वदन् प्रकोष्ठात् बहिः आगतवान्।

नारायणः मालती च तम् अनुसृतवन्तौ। कोदण्डपाणिः औषधस्य कूपिकां ताभ्यां दत्त्वा, तत् औषधं दिने कतिवारं, कियत् दातव्यम् इत्यादिकं सर्वम् उक्त्वा ततः निर्गतवान्।

दिनत्रयानन्तरं श्रीमुखः सम्पूर्णरूपेण व्याधिमुक्तः अभवत्। अनन्तरं कदाचित् श्रीमुखः कोदण्डपाणिं द्रष्टुं गत्वा– "हे कोदण्डपाणे! भवता दत्तेन औषधेन सञ्जीविनीतः इव महत् प्रयोजनं लब्धम्। इदानीम् अहं स्वस्थः अस्मि। पूर्वापेक्षया अधिकशक्तिमान् अपि अस्मि भोः" इति उक्तवान्।

"महान् प्रमोदः, श्रीमुख! मया दत्तम् औषधं मालतीनारायणौ दिने कतिवारं दत्तवन्तौ?" इति पृष्टवान् कोदण्डपाणिः।

"मह्यं दिने त्रिवारं दत्तवन्तौ। एकस्मिन् काले षट्चमसान् निर्दिष्टसमये विना विस्मरणं दत्तवन्तौ भोः। महत्या जागरूकतया मम सेवां कृतवन्तौ तौ" इति उक्तवान् श्रीमुखः।

कोदण्डपाणिः क्रोधेन– "एवम् अस्ति वा विचारः! एतत्क्षणे एव भवता तौ ग्रामं प्रेषयितव्यौ। तथा न करोति चेत् भवतः प्राणापायः भवेत्। तौ भवतः सम्पत्तिं केवलम् इच्छतः, न तु भवन्तम्। तत् औषधं दिने त्रिवारं देयम्। एकस्मिन् समये केवलं



चमसत्रयमितं देयम्। तदपेक्षया अधिक दीयते चेत्, प्राणापायः भवेत् इति तौ जागरितवान् आसम् अहम्'' इति उक्तवान्।

''एवं वा!'' इति श्रीमुखः आश्चर्यम् अनुभवन्—'' एवं तर्हि भवता सूचितापेक्षया अधिकस्य औषधस्य सेवनेन अपि मम कोऽपि अपायः न अभवत् किल? एतत् कथम्?'' इति पृष्टवान्।

तदा कोदण्डपाणिः स्मयमानः— ''वस्तुतः तस्य औषधस्य अधिकाधिकसेवनेन अधिकप्रयोजनम् एव भवति, न तु कोऽपि अपायः। तयोः वास्तविकस्वरूपं ज्ञातुम् एव अहं तथा तौ उक्तवान्। नारायणस्य वचनेन मम तदा एव संशयः उत्पन्नः। तौ किमर्थं भवतः गृहम् आगतवन्तौ इति इदानीं भवान् ज्ञातवान् वा?'' इति उक्तवान्।

कोदण्डपाणेः वचनं श्रुत्वा श्रीमुखस्य मालवीगोपालयोः स्मरणं जातं, यौ विंशतिवर्षेभ्यः तं सेवितवन्तौ।

''मम भागिनेयस्य तथा तस्य पत्न्याः धूर्तस्वभावेन अत्यन्तविश्वसनीयौ मालवीगोपालौ मया वृथा परित्यक्तौ। तौ पुनः आगच्छतः चेत्, कियत् सौभाग्यं भवेत्! तादृशयोः प्राप्तिः पुनः कथं वा भवेत्?'' इति उक्तवान् श्रीमुखः।

कोदण्डपाणिः तस्य भुजम् आस्फाल्य— ''तौ द्वौ अपि मम समीपे एव स्तः भोः। भवतः रोगविचारं श्रुत्वा तौ महत् दुःखं सङ्कटं च अनुभूतवन्तौ। इदानीम् एव कानिचन औषधमूलानि आनेतुं कुत्रचित् गतवन्तौ। तयोः आवश्यकता अस्ति चेत्, भवतः गृहं प्रेषयिष्यामि'' इति उक्तवान्।

''आवश्यकता नाम किम्? तौ द्वौ अपि मम पुत्रस्नुषयोः तुल्यौ भोः। इदानीं तयोः मूल्यं ज्ञातम्। अस्तु पाणे, अहम् आगच्छामि'' इति उक्त्वा ततः निर्गत्य गृहं गतवान्। परेद्युः प्रातः एव नारायणं तस्य पत्नीं च गृहात् निष्कासितवान्। तयोः नाम्नि लिखितं मृत्युपत्रम् अपि निर्मूलं कृतवान्।

अनन्तरं गोपालः मालवी च पुनः पूर्ववत् श्रीमुखस्य गृहं समागत्य, वृद्धस्य श्रीमुखस्य सेवां कुर्वन्तौ आस्ताम्।





# उत्तररामायणम्

लक्ष्मणः किमपि अनुक्त्वा अश्रुधारा स्रावयन्, सीतां परितः प्रदक्षिणं कृत्वा, साष्टाङ्गनमस्कारं च कृतवान्। अनन्तरं नौकायाम् उपविश्य, नदीं तीर्त्वा, रथम् आरुह्य च, नद्याः अन्यस्मिन् तीरे अनाथावत् स्थित्वा रोदनं कुर्वतीं सीतां पुनः पुनः परिवृत्य पश्यन् दूरं दूरं निर्गतवान्।

यावत् रथः अदृश्यः अभवत्, तावत्पर्यन्तं ताम् एव दिशां पश्यन्ती स्थिता सीता, स्वीयां दुरवस्थां सोढुम् असमर्था भूत्वा, उच्चैः आक्रन्दनं कर्तुम् आरब्धवती। तदा तां परितः स्थिते निर्जने अरण्यप्रदेशे तस्याः रोदनस्य प्रतिध्वनिः श्रूयते स्म।

एवं रीत्या तस्मिन् निर्जनारण्ये रुदतीम् एकाकिनीं सीतां, समिधां सङ्ग्रहणार्थं तत्र आगताः केचन मुनिकुमाराः दृष्ट्वा, धावन्तः वाल्मीकिमहर्षेः समीपं गतवन्तः, तथा– "तमसानद्याः तीरे काचन नारी केनापि कारणेन उच्चैः रुदती, दिशः पश्यन्ती अस्ति। प्रायः आकाशतः अवतीर्य आगता देवतास्त्री स्यात् सा। तया सह अन्यः कोऽपि नास्ति। कृपया भवान् शीघ्रं गत्वा तां पश्यतु। भवतः आज्ञां विना तस्याः समीपं गन्तुं भीताः वयम् अत्र आगतवन्तः" इति निवेदितवन्तः।

महामुनिः वाल्मीकिः, सद्यः एव उत्थाय प्रस्थितवान्। सः सीतायाः समीपम् आगत्य ताम् अभिज्ञाय– "भोः, दशरथस्य प्रियस्नुषे सीतादेवि! भवत्याः कृते सुस्वागतम्। भवती अत्र कथम् आगतवती इति अहम् ऊहया ज्ञातवान्। त्रयाणां लोकानाम् अपि वार्ताः ज्ञातुम् अहं शक्नोमि। मम आश्रमः अत्रैव

८. सीतायाः वाल्मीक्याश्रमप्रवेशः।



समीपे अस्ति। मम आश्रमे भवती निर्भयं स्थातुं शक्नोति। तत्र तापसस्त्रियः सन्ति। अलं दुःखेन। मम अर्घ्यं स्वीकरोतु। मम आश्रमं भवत्याः मातृगृहं मत्वा निश्चिन्तभावेन तत्र तिष्ठतु। आगच्छतु वत्से मया सह" इति परमवात्सल्येन आहूतवान्।

तदा सीता अश्रूणि प्रमृज्य, वाल्मीकिमहर्षिं नमस्कृत्य, तेन दत्तम् अर्घ्यं स्वीकृत्य, तेन सह ततः प्रस्थाय तस्य आश्रमं प्रविष्टवती।

वाल्मीकिः तां मुनिपत्नीभ्यः समर्प्य, एतां स्नेहगौरवादरैः पश्यन्तु इति ताः सर्वाः प्रार्थितवान्। ताः सर्वाः सीतां महत्या प्रीत्या स्वागतीकृतवत्यः।

अयोध्यां प्रति गच्छन् लक्ष्मणः सुमन्त्रं— "भो सुमन्त्र, सीतायाः वियोगेन अग्रजस्य रामस्य कीदृशं दुःखं सम्प्राप्तं पश्यतु। निरपराधिनी सीता अपि कीदृशं कष्टं प्राप्तवती! वयम् एव सोढुम् असमर्थाः स्मः। सा किं वा कुर्यात्?" इति उक्तवान्।

लक्ष्मणस्य वचनं श्रुत्वा सुमन्त्रः— "लक्ष्मण! पूर्वम् एवं मुनिभिः उक्तम् अस्ति यत् रामः अल्पम् एव सुखं प्राप्नोति, अनन्तरम् एतादृशं पत्नीवियोगं प्राप्स्यति इति। एतत् एकं रहस्यम्। तत् रहस्यम् अहं भवन्तं कथयामि। भवान् एतं विचारं भरतशत्रुघ्नौ न कथयतु। एतत् रहस्यं भवता गोपनीयम्" इति उक्त्वा तं विचारं वर्णितवान्।

पूर्वं कदाचित् दशरथः वसिष्ठस्य आश्रमं गतवान्। तदा तत्र अत्रिमहर्षेः पुत्रः दुर्वासाः उपस्थितः आसीत्। दशरथः मुनिजनैः स्वागतसत्कारादिकं प्राप्य, तैः सह वार्तालापं कुर्वन् दुर्वाससं दृष्ट्वा— "हे महात्मन्, मम पुत्राणां भविष्यज्जीवनं कीदृशम् अस्ति? मम रामस्य आयुः कियत्प्रमाणकम् अस्ति? अन्यकुमाराः कियत्कालपर्यन्तं जीविष्यन्ति? मम रामस्य कति पुत्राः जनिष्यन्ते? त्रिकालज्ञानी भवान् कृपया एतत् सर्वं कथयति वा?" इति पृष्टवान्।

एतत् वचनं श्रुत्वा दुर्वासाः एकां पुरातनवार्तां कथितवान्।

"देवासुराणां युद्धे पराजिताः असुराः

भृगुमहामुनेः पत्न्याः समीपं गत्वा तां शरणं गताः। तेषां विषये कृपालुतया सा, तेभ्यः अभयं दत्तवती। एतत् दृष्ट्वा विष्णुः क्रुद्धः भूत्वा, स्वीयचक्रायुधेन भृगुपत्न्याः शिरसः छेदनं कृतवान्। एतेन भृगुमहामुनिः क्रोधतप्तः भूत्वा– "विष्णुः भूलोके जन्मप्राप्य पत्न्याः वियोगेन परितापं प्राप्नोतु" इति शप्तवान्। तस्य शापस्य प्रभावेण विष्णुः दशरथस्य पुत्रः भूत्वा, रामः इति नाम्ना ख्यातः अभवत" इति।

"अतः भोः दशरथराज, रामेण अवश्य भृगुमहामुनेः शापः अनुभोक्तव्यः भवति। सः एकादशसहस्रवर्षाणि यावत् राज्यपरिपालनं कुर्वन् अश्वमेधयागम् अपि करिष्यति। अनन्तरं ब्रह्मलोकं गमिष्यति। तस्य द्वौ पुत्रौ जनिष्येते। स्वयं रामः एव तयोः राज्यपट्टाभिषेकं करिष्यति" इति उक्तवान् मुनिः दुर्वासाः।

एवंरीत्या वार्तालापं कुर्वन्तौ लक्ष्मणसुमन्त्रौ सायङ्काले गोमतीनामकं स्थानं प्राप्य, तत्र तां रात्रिं यापितवन्तौ।

परेद्युः प्रातः तौ पुनः अयोध्यां प्रति प्रयाणम् आरब्धवन्तौ। तदा लक्ष्मणः अतीव चिन्तामग्नः अभवत् यत् दुःखतप्तम् अग्रजं रामं किं वदेयम् इति।

तयोः रथः अयोध्यां प्राप्नोत्। राजप्रासादस्य पुरतः लक्ष्मणः रथात् अवतीर्य राजभवनं प्रविष्टवान्। तत्र दीनभावेन अश्रूणि स्रावयन्तं रामं नमस्कृत्य– "भवतः आज्ञानुसारेण सीतादेवीं गङ्गानद्याः तीरे वाल्मीकिमहामुनेः आश्रमप्रदेशे परित्यज्य





आगतवान् अस्मि। इदानीं चिन्तया किमपि प्रयोजनं नास्ति। वृद्ध्यनन्तरं क्षयः, उन्नत्यनन्तरं पतनं, संयोगानन्तरं वियोगः च अनिवार्याः खलु? इतःपरं अपवादः स्वयम् एव अपगच्छति" इति उक्तवान्।

"लक्ष्मण, मम आज्ञापालनं कृतवान् भवान्। तेन सन्तोषः अभवत्। मम कापि चिन्ता नास्ति। अहं पूर्ववत् समीचीनः एव अस्मि" इति उक्तवान् रामः।

दिनचतुष्टयात् रामः प्रजाना सुखदुःखदिपरिशीलनं न कृतवान् आसीत्। एषः प्रमादभूतः विचारः इति चिन्तयन् रामः, तं वृत्तान्तं लक्ष्मणं कथयित्वा, तस्य वृत्तान्तस्य संवादभूतां नृगमहाराजस्य कथां लक्ष्मणं श्रावितवान्। सा कथा इत्थम् आसीत–

पूर्वं कदाचित् नृगमहाराजः कोटिशः पशून् ब्राह्मणेभ्यः दानरूपेण दत्तवान्। तेन दत्तेषु पशुषु एकः पशुः प्रमादवशात् कथञ्चित् पुनः प्रत्यागत्य नृगमहाराजस्य पशुसमूहेन मिलितवान्। एतं विषयम् अजानन् महाराजः तं पशुम् अन्यस्मै ब्राह्मणाय दत्तवान्।

तं पशुं यः प्रथमं प्राप्तवान्, सः प्रथमब्राह्मणः स्वीयं पशुम् अन्विष्यन्, कनखलनामके स्थाने द्वितीयब्राह्मणस्य गृहे तं पशुं दृष्ट्वा, आत्मना सङ्केतितं तस्य नाम उच्चार्य, तम् आहूतवान्। सः पशुः आत्मनः प्रथमयजमानस्य कण्ठस्वरस्य अभिज्ञानं प्राप्य, बन्धनरज्जुं छित्त्वा तस्य समीपम् आगत्य, तेन सह प्रस्थितः।

एतत् दृष्ट्वा द्वितीयब्राह्मणः आश्चर्येण– "मम पशुं भवान् अपहृत्य गच्छति किल, किमिदम् अकार्यम्! एतं पशुं नृगमहाराजः मह्यं दत्तवान्" इति उक्तवान्।

"सः नृगमहाराजः एव एतं मह्यं दत्तवान्" इति दृढस्वरेण उक्तवान् प्रथमब्राह्मणः।

यदा तयोः वादविवादः अपरिहार्यः अभवत्, तदा तौ द्वौ अपि साक्षात् नृगमहाराजस्य समीपं गतवन्तौ। किन्तु तत्र राजदर्शनस्य अवकाशः एव न लब्धः। राजभवनस्य महाद्वारस्य समीपे एव

अनेकदिनानि यावत् महाराजं निरीक्षमाणौ तौ स्थितवन्तौ। अन्ते तौ द्वौ अपि ब्राह्मणौ क्रोधतप्तौ भूत्वा– "एषः महाराजः कृकलासः भवतु, तथा अन्यैः अदृश्यमानः गर्तमध्ये स्थित्वा जीवनं यापयतु" इति शप्तवन्तौ।

तत्र स्थिताः चाराः भीताः भूत्वा तां वार्तां महाराजं निवेदितवन्तः। एतेन सम्भ्रान्तः महाराजः शीघ्रं शीघ्रं तत्र आगत्य तयोः पादेषु निपत्य क्षमां याचितवान्। तदा तौ ब्राह्मणौ– "यदुवंशे वासुदेवः जन्म प्राप्य भवन्तं शापविमुक्तं करिष्यति" इति तं समाश्वस्य ततः निर्गतवन्तौ।

अनन्तरं नृगमहाराजः वसुनामकं स्वपुत्रं पट्टाभिषिक्तं कृत्वा, उत्तरत्र कृकलासत्वं प्राप्नुवन् सः, तस्मिन् काले अन्यैः अदृश्यः सन् सुखजीवनं यापयितुं कांश्चन गर्तान् निर्मापितवान्। तान् गर्तान् परितः वर्तमानं प्रदेशं पुष्पसस्यैः सुगन्धभरितं कृतवान्। इदानीम् आत्मानम् अपि तादृशी एव दुःखपरिस्थितिः प्राप्ता अस्ति।

इत्थं रामः लक्ष्मणं नृगमहाराजस्य कथां कथयित्वा, पुनः निमिराजस्य कथां वक्तुम् आरब्धवान्।

इक्ष्वाकुमहाराजस्य पुत्रेषु निमिः द्वादशः। सः एकं दिव्यं नगरं निर्माप्य, वैजयन्तम् इति तस्य नाम निश्चितवान्। अनन्तरं सः स्वीयं जनकं सन्तोषयितुम् एकं यज्ञं कर्तुं प्रवृत्तः, वसिष्ठम्– "एतस्मिन् यज्ञे भवान् ऋत्विक् भवतु" इति प्रार्थितवान्। किन्तु ततः पूर्वम् एव वसिष्ठः इन्द्रेण यज्ञं कारयितुम् आहूतः आसीत्। अतः प्रथमम् इन्द्रस्य यज्ञं समाप्य,





अत्र आगत्य भवतः यज्ञं कारयिष्यामि इति उक्त्वा वसिष्ठः इन्द्रलोकं गतवान्। तदा निमिः गौतमम् ऋत्विजं कृत्वा स्वीयं यज्ञं समापितवान्। तत्र इन्द्रस्य यज्ञं समाप्य सद्यः एव वसिष्ठः प्रत्यागत्य पश्यति यत् निमेः यागः समाप्तः। निमिः आत्मानम् उपेक्ष्य गौतमद्वारा यज्ञकार्यं समापितवान् अस्ति इति दृष्ट्वा क्रोधेन वसिष्ठः महाराजस्य समीपं गतवान्।

किन्तु तस्मिन् समये निमिः निद्रामग्नः आसीत्। वसिष्ठः निमेः दर्शनार्थं दीर्घकालं यावत् प्रतीक्षणं कृत्वा, एषः निमिः उद्देश्यपूर्वकम् एव माम् उपेक्षमाणः अस्ति इति मत्वा महता कोपेन— "रे निमिराज! अन्यद्वारा यज्ञं कारयित्वा माम अवमानितवान् भवान्। तदुपार इदानीं निश्चिन्ततया निद्राति खलु। भवतः शरीरं चेतनशून्यं भवतु।" इति शप्तवान्।

अनन्तरं जागरितः निमिः वसिष्ठस्य शापविचारं ज्ञात्वा— "निद्रामग्नं मां भवान् शप्तवान् खलु? एतादृशस्य भवतः शरीरम् अपि चेतनरहितं भवतु" इति प्रतिशापं दत्तवान्।

एवंरीत्या परस्परशापप्रभावेण निमिवसिष्ठौ 'विदेह' स्थितिं प्राप्तवन्तौ।

तदा वसिष्ठः वायुरूपं धृत्वा स्वजनकस्य ब्रह्मणः समीपं गत्वा— "निमेः शापेन मम देहः नष्टः। देहाभावात् अहं नितरां पीडितः अस्मि। किमपि कार्यं कर्तुं न शक्नोमि। अतः भोः जनक, मह्यं शरीरान्तरं प्रदाय माम् अनुगृह्णातु" इति सदैन्यं प्रार्थितवान्।

ब्रह्मा तु 'मित्रावरुणयोः तेजसा अन्यत् शरीरं सम्पादयतु' इति वसिष्ठम् उपदिष्टवान्। इत्थं शरीरान्तरं सम्पाद्य सः वसिष्ठः इक्ष्वाकुवंशीयानां कुलपुरोहितः अभवत्।

निमेः अचेतनशरीरं मुनिजनाः रक्षितवन्तः। अनन्तरं देहरहितः निमिः सर्वेषां प्राणिनां नेत्रेषु यथा वसेत्, तथा वरेण तं ते अनुगृहीतवन्तः। तदनन्तरं ते निमेः शरीरं मथितवन्तः। तथा मथनेन एकः बालः उत्पन्नः। सः बालः मिथिः इति नाम प्राप्तवान्। जनकः इति तस्य एव नामान्तरम्। तस्य नाम्ना एव तस्य नगरं

मिथिला इति प्रसिद्धम् अभवत्।

रामेण उक्ताः कथाः श्रुत्वा लक्ष्मणः– "अग्रज, निमिः वीरः क्षत्रियः, तथा वसिष्ठः महात्मा। तथापि किमर्थं तौ शान्तिं न अवलम्बितवन्तौ" इति पृष्टवान्।

"अनुज, रोषतप्तः नरः यद्यपि महात्मा भवेत्, तथापि सः शान्तिं त्यजति एव। तथा रोषनिग्रहसमर्थः एकः एव आसीत्। सः ययातिः" इति उक्त्वा रामः यद्यपि तदा मध्यरात्रं जातम् आसीत्, तथापि निद्राम् अप्राप्नुवन्, लक्ष्मणं ययातेः वृत्तान्तं वक्तुम् आरब्धवान्–

नहुषस्य पुत्रः ययातिः। तस्य पत्नीद्वयम्। एका वृषपर्वराजस्य कुमारी शर्मिष्ठा। द्वितीया शुक्राचार्यस्य पुत्री देवयानी। किन्तु ययातेः शर्मिष्ठायाः उपरि यादृशी प्रीतिः आसीत्, तादृशी प्रीतिः देवयानेः विषये न आसीत्, तथैव शर्मिष्ठायाः पुत्रस्य पूरोः उपरि यादृशवात्सल्यम् आसीत्। तादृशवात्सल्यं देवयानेः पुत्रस्य यदोः उपरि न आसीत्।

वस्तुतः पूरुकुमारः सुशीलः गुणवान् च। सुगुणवत्याः शर्मिष्ठायाः अनुरूपः पुत्रः आसीत्।

पूरोः उपरि स्वजनकस्य अधिकप्रीतिं दृष्ट्वा, असहमानः यदुः स्वजननीं देवयानीं– "हे मातः, शुक्राचार्यसदृशस्य महात्मनः कुमारी अस्ति भवती। तादृश्याः भवत्याः अहं पुत्रः। एवं सत्यपि किमर्थम् आवाभ्याम् एतादृशः अवमानः सोढव्यः?



आवां द्वौ अपि अग्निं प्रविश्य प्राणत्यागं करवाव। भवती एतम् अवमानं यथाकथञ्चित् सहेत। अहं तु सर्वथा सोढुं न शक्नोमि। अतः अहम् आत्महत्यां करिष्यामि। अनुज्ञां ददातु" इति आग्रहं कुर्वन् रोदितुम् आरब्धवान्।

पुत्रस्य दुःखं दृष्ट्वा देवयानी रोषतप्ता अभवत्। सद्यः एव सा स्वजनकं स्मृतवती। उत्तरक्षणे एव शुक्राचार्यः तस्याः समीपम् आगतवान्।

"तात, मम पतिः माम् अत्यन्तहीनभावेन पश्यति। एतम् अवमानं सोढुम् अहम् असमर्था अस्मि। अग्निं प्रविश्य वा, विषं पीत्वा वा, जलप्रवेशेन वा प्राणत्यागं कर्तुं मम इच्छा भवति। भवन्तं पृष्ट्वा एतत् कार्यं

करणीयम् इति मया चिन्तितम् अस्ति" इति देवयानी अश्रूणि स्रावयन्ती जनकम् उक्तवती।

स्वीयपुत्र्याः दुरवस्थां दृष्ट्वा शुक्राचार्यः असहनीयं क्रोधं प्राप्तवान्। तेन सः पूर्वापरविचारम् अचिन्तयन्– "ययातिः वृद्धः भवतु" इति शापं दत्त्वा, ततः निर्गत्य स्वीयं निवासस्थानं गतवान्। शुक्राचार्यस्य शापं ययातिः अत्यन्तशान्तभावेन स्वीकृतवान्। किन्तु यौवनभोगैः सः तृप्तः न आसीत्।

सः पुत्रं यदुम् आहूय– "मम इदानीम् अपि भोगभाग्यादिकम् अनुभोक्तुं महती आशा अस्ति। सुखभोगादिभिः पर्याप्तां तृप्तिं न प्राप्तवान् अहम्। अतः भवतः यौवनं मह्यं दत्त्वा, मम वार्धक्यं किञ्चित्कालं यावत् भवान् स्वीकरोति वा? अहं विषयभोगादिभिः तृप्तिं प्राप्य, भवदीयं यौवनं भवते प्रत्यर्प्य, मम वार्धक्यं पुनः स्वीकरिष्यामि" इति उक्तवान्।

"किमिदम् उच्यते भवता? स्वीयं प्रियपुत्रं पूरुं स्वपार्श्वपीठे उपवेश्य महत्या प्रीत्या भोजयति किल? तम् एव पृच्छतु। अहं किमर्थं भवतः वार्धक्यं स्वीकुर्याम्?" इति उक्तवान् यदुः निर्दाक्षिण्यभावेन।

तदा ययातिः पूरुम् आहूय, यदुं यत् पृष्टवान्, तदेव तम् अपि पृष्टवान्। स्वीयपितुः वार्धक्यं स्वीकर्तुं पूरुः मनःपूर्वकम् अङ्गीकृतवान्। ययातिः स्वीयं वार्धक्यं पूरवे दत्त्वा, तस्य यौवनं स्वयं स्वीकृत्य अनेकसहस्रयागान् कृतवान्। अनेकसहस्रवर्षाणि यावत् राज्यपालनं कृतवान्। अन्ते सः तृप्तः भूत्वा, स्वपुत्रात् स्वीयं वार्धक्यं प्रतिस्वीकृत्य, तम् एव सिंहासनस्थं कृत्वा राज्याभिषेकं कृतवान्। देवयानेः पुत्रः यदुः राज्यार्हः न अभवत्।

ययातेः कालानन्तरं पूरुः प्रतिष्ठानपुरं राजधानीं कृत्वा बहुकालं यावत् राज्यपरिपालनं कृतवान्।

एवंरीत्या रामलक्ष्मणौ कथालापमग्नौ एव आस्ताम्। तथैव रात्रिः व्यतीता। पूर्वस्यां दिशि अरुणकिरणाः दृष्टिगोचराः अभवन्।





# दुष्टपालनम्

पूर्वतनकाले रुद्रपुरराज्यं सिंहकेतुः नाम राजा पालयति स्म। सः स्वभावेन क्रूरः। प्राजानां हितं कदापि न गणयति। शुल्कं, करः, विशेषभूशुल्कम् इति विविधव्याजेन प्रजाभ्यः धनं सङ्गृह्णाति। एतद्विषये सः न्यायान्यायं न पश्यति। ये करादिकं न यच्छन्ति तान् कशाप्रहारैः निर्दयं दण्डयति सः। विरोधं ये आचरन्ति तान् शूलम् आरोपयति। प्रजानां दुःखम् आपदः च सहजाः इति तस्य सिद्धान्तः।

सिंहकेतुमहाराजस्य मन्त्री धर्मचरणः विवेकी। सः महाराजं सन्मार्गे आनेतुं बहुधा प्रयत्नं करोति। तथापि सः विशेषप्रयोजनं किमपि न पश्यति।

एतादृशात् शासनात् प्रजानां कष्टं दिने दिने वर्धते। देशे सर्वत्र अशान्तिः। प्रजाः सिंहकेतोः पालनं राक्षसशासनम् इति भावयन्ति स्म।

सिंहकेतुमहाराजस्य मृगयायाम् अपि व्यसनम् आसीत्। एकदा सः दशभिः सैनिकैः सह मृगयार्थम् अरण्यं गतवान्। यं यं मृगं पश्यति तम् अनुसरति सः। एवं कुर्वन् सः क्रमशः सैनिकेभ्यः दूरं गतः। महाराजः कुत्र गतवान् स्यादिति सैनिकाः न ज्ञातवन्तः एव।

'अहम् इदानीं सैनिकेभ्यः दूरम् आगतः। इतःपरम् एकाकिना एव मया नगरं गन्तव्यम्' इति चिन्तयन् सः सिंहकेतुः ततः नगरं प्रति प्रस्थितः। तत्समये चत्वारः दृढकायाः वृक्षात् उत्प्लुत्य जालं प्रसार्य तं बद्धवन्तः। ते लुण्टाकाः चोराः।

ते चोराः सिंहकेतोः अमूल्यानि आभरणानि वशीकृत्य तं स्वनायकस्य उग्रकण्ठस्य समीपं नीतवन्तः।

उग्रकण्ठः सिंहकेतुं परीक्षादृष्ट्या पश्यन्– "सत्यं वदतु, कः भवान्?" इति दर्पेण पृष्टवान्।

"अहम् एतस्य देशस्य राजा सिंहकेतुः" इति दर्पेण एव उक्तवान् सिंहकेतुः।

एतत् वचनं श्रुत्वा उग्रकण्ठः स्वसहचरान् उग्रदृष्ट्या पश्यन्– "अये मूर्खशिखामणयः! एषः न अन्यः। अस्मादृशः, अस्मदीयः एव। अतः एतस्य बन्धनम् अपसारयन्तु" इति गर्जितवान्।

महाराजतः वशीकृतानि आभरणादीनि महाराजाय एव प्रत्यर्पयन् उक्तवान् उग्रकण्ठः– "अज्ञानतः किमपि प्रवृत्तम्। क्षाम्यत्। वयं सर्वे समानाः इति अंशम् अजानन्तः मदनुचराः भवन्तं बद्धवन्तः। इदानीं भवान् स्वेच्छया इतः गन्तुम् अर्हति" इति।

उग्रकण्ठस्य वचनं श्रुत्वा आश्चर्यम् अनुभवन् राजा ततः निर्गतवान्। अरण्यमार्गेण यदा सः किञ्चिद्दूरम् अग्रे गतवान् तदा कश्चन पिशाचः महाराजस्य पुरतः प्रत्यक्षम् अभवत्। सः आकाशे एव इतस्ततः सञ्चरन् विकटाट्टहासं प्रदर्शितवान्। सिंहकेतुः धैर्येण खड्गं हस्तेन स्वीकृत्य तं सम्मुखीकर्तुं सिद्धः अभवत्।

तत् दृष्ट्वा पिशाचः उपहासपूर्वकं हसन्– "अहो हो मूर्ख! खड्गतः मम कापि हानिः न भवति इति भवान् न जानाति वा? अहं वायुरूपः अस्मि। यदि अहम् इच्छामि तर्हि भवतः रक्तम् आकण्ठं पिबेयम्। किन्तु इदानीम् अहं तथा न करोमि, यतः मृतान् प्राणिनः एव खादामि इति मम व्रतम्। भवान् तु महाधैर्यशाली इति भाति। साधु! कः भवान्?" इति पृष्टवान्।



"अहम्! एतस्य रुद्रपुरराज्यस्य महाराजः सिंहकेतुः" इति साभिमानम् उक्तवान् सिंहकेतुः।

तत् वचन श्रुत्वा पिशाच. "हा हन्त!" इति विकारध्वनिना आक्रोशनं कुर्वन्– "भवान् एव वा सिंहकेतुः, यश्च अस्मादृशान् पिशाचान् अपि स्वव्यवहारेण अतिशेते इति ख्यातिं प्राप्तवान्। देवो दयालुः! अन्यथा अल्पाहारेच्छया भवन्तं मारितवान् स्याम्। तदा च 'शाश्वताहारप्राप्तौ साहाय्यकं भवन्तं मारितवान्' इति मम निन्दनम् अकरिष्यन् सर्वे पिशाचाः" इति वदन् अदृश्यः अभवत्।

सिंहकेतुः पिशाचस्य वचनं श्रुत्वा, तस्य भीतिपूर्णं व्यवहारं दृष्ट्वा च अत्याश्चर्यम् अनुभवन् अग्रे गतवान्।

यदा ततोऽपि अग्रे सः गतवान् तदा वृक्षसमूहस्य मध्यतः कश्चन भीकरः ध्वनिः श्रुतः। सिंहकेतुः आश्चर्येण पृष्ठतः दृष्टवान्। तदा कस्यचित् वृक्षस्य पृष्ठतः उपविष्टः राक्षसः पुरतः आगत्य हस्तं प्रसार्य सिंहकेतुं मुष्टौ दृढं गृहीतवान्।

"अये मानव! अहं बुभुक्षया पीड्यमानः आसम्। सुसमये अत्र आगतवान् भवान्" इति वदन् राक्षसः तं खादितुं मुखम् उद्घाटितवान्। तत्सन्दर्भे सिंहकेतोः वेषभूषादयः राक्षसस्य दृष्टिपथे आगताः। तदा सः मुखं पिधाय– "भोः, वेषभूषणेन भवान् उच्चकुले जातः इव भाति। कः भवान्?" इति पृष्टवान्।

"अहम् एतस्य देशस्य महाराजः सिंहकेतुः" इति कम्पमानेन स्वरेण उक्तवान्





राजा।

तदा राक्षसः उच्चैः हसन्– "एवं वा? भवन्तं यदि मारयामि तर्हि इतःपरं प्रतिदिनम् अपि मम उपवासः एव गतिः भवेत्। भवान् यथापूर्वं व्यवहरन् चिरकालं जीवतु" इति वदन् सिंहकेतुं त्यक्तवान्।

राक्षसस्य वचनं श्रुत्वा अपि सिंहकेतोः अत्याश्चर्यम्। 'चोराणां नायकः पिशाचः, राक्षसः च मां मारयितुं समर्थाः अपि किमर्थं न मारितवन्तः?' इति बहुधा चिन्तयन् एकस्य वृक्षस्य अधः उपविष्टवान् सः।

महाराजस्य अन्वेषणार्थम् अरण्ये सर्वत्र अटित्वा सैनिकाः सिंहकेतुसमीपम् एव आगतवन्तः। अनन्तरं तैः सह एव गच्छन् सिंहकेतुः नगरगमनमार्गम् अन्विष्य सायङ्कालसमये राजभवनं प्राप्तवान्।

सिंहकेतुः रात्रौ मन्त्रिणं धर्मचरणम् स्वसमीपम् आहूय अरण्ये जातं स्वकीयम् अनुभवम् उक्तवान्। "ते त्रयः अपि मां मारयितुं समर्थाः आसन्। तथापि ते तथा किमर्थं न कृतवन्तः? तत्रापि चोरनायकः माम् उक्तवान् यत् भवान् मादृशः एव इति। पिशाचः माम् आहारदातारम् अवदत्। राक्षसः तु 'यथापूर्वं व्यवहरन् चिरकालं जीवतु' इति आशिषा अनुगृहीतवान्। एतेषां त्रयाणाम् अपि वचनस्य अर्थम् अहं न ज्ञातवान्। भवान् किमपि वक्तुं शक्नुयात् वा?" इति पृष्टवान् च।

धर्मचरणः क्षणकालं मौनं स्थित्वा– "महाराज! अहं तेषां वचनस्य अर्थं जानामि। अभयं यदि स्यात् तर्हि वदेयम्। तत् श्रुत्वा भवान् कुपितः न भवेत्। तेषां वचनस्य तत्त्वं ज्ञातुं भवता प्रयत्नः करणीयः। सावधानतया आलोचनेन तत् भवान् अपि ज्ञातुं शक्नोति" इति उक्त्वा मौनं स्थितवान्।

सिंहकेतुः मन्त्रिणे अभयं दत्तवान्। तदा मन्त्री धर्मचरणः एवं विवरणं दत्तवान्– "भवान् अस्मत्सदृशः एव इति उक्तवान् चोरनायकः। एतस्य अर्थः – चोरः अरण्ये प्रयाणिकानां लुण्ठनं करोति चेत् भवान् राज्यस्थान् जनान् लुण्ठयति इति। भवतः लुण्टाकानां च मध्ये कोऽपि भेदः नास्ति इति

तात्पर्यम्।

पिशाचः उक्तवान् यत् भवान् करादीनां व्याजेन प्रजाः शूलम् आरोपयति, तदा प्राप्तान् शवान् खादन्तः वयं जीवामः। वयं तु मृतान् केवलं खादामः। तेन कस्यापि अपायः नास्ति। भवान् जीवतां जनानां प्राणान् अपहरन् लोककण्टकः एव संवृत्तः। भवतः मारणेन पिशाचानाम् अस्माकम् आहारभूताः शवाः न उपलभ्येरन् इति।

राक्षसः अभिप्रैति यत्— राक्षसव्यवहारापेक्षया भवतः व्यवहारः नीचः घोरः च इति। भवतः व्यवहारतः भीताः ये अरण्यं प्रति धावन्ति ते एव तेषाम् आहारः। अतः एव सः भवन्तं त्यक्तवान्, चिरं जीवतु इति आशिषा अनुगृहीतवान् च'' इति।

मन्त्रिणः धर्मचरणस्य वचनानि सावधानं श्रुत्वा सिंहकेतुः— ''एतेन सिध्यति यत् अहं चोराणां पिशाचानां राक्षसानां च अपेक्षया अपि क्रूरः इति। एवं तर्हि एषु दिनेषु तादृशीं दुष्टताम् आचरितवान् वा अहम्?'' इति पृष्टवान्।

धर्मचरणः विनयेन— ''महाराज! एतद्विषये भवता एव सुदीर्घम् आलोच्य वं निर्णेतव्यम्। मया यत् उक्तं तत्र किमपि अनौचित्यम् अस्ति चेत् मां क्षाम्यतु कृपया'' इति उक्तवान्।

तदा सिंहकेतुः मन्त्रिणः पादौ नमस्कृत्य— ''भवान् मयि विवेकं जागरितवान्। अद्य आरभ्य धर्मेण राज्यपालनं करोमि। 'उत्तमः राजा' इति कीर्तिं सम्पाद्य एव प्राणान् त्यक्ष्यामि। भवतः साहाय्येन एतत् सिध्येत् मार्गदर्शनेन आशिषा च माम् अनुगृह्णातु इति उक्तवान्।

धर्मचरणः आशिषा अनुगृह्य— ''अद्य भवान् दुष्टगुणान् पराजित्य विजयं सम्पादितवान्। एतेन अहम् अतीव सन्तुष्टः अस्मि'' इति उक्तवान्।

अनन्तरं सिंहकेतुः धर्ममार्गेण राज्यपरिपालनं कुर्वन् उत्तमैः शासनैः प्रजोपकारीणि कार्याणि कुर्वन् उत्तमां कीर्तिं सम्पादितवान्।





# विमोचनम्

बहुभ्यः वर्षेभ्यः पूर्वम् सह्यपर्वतप्रदेशे आरुणिः नाम कश्चन ऋषिः आसीत्। कदाचित् तस्य मनसि कश्चन विचित्रः पश्नः उत्पन्नः– 'सृष्टौ एतावन्तः विभिन्नाः जीविनः किमर्थं सन्ति? केवलं मानवाः तिष्ठन्ति चेत् पर्याप्तं न वा?'' इति।

एषः ऋषिः ब्रह्माणं ध्यायन् कठोरं तपः आचरितवान्। ब्रह्मणः अनुग्रहेण प्राणिनं मानवं कर्तुं समर्थां शक्तिं सम्पादितवान् च। यदा सः तपोबलात् वरं प्राप्य प्रत्यागच्छन् आसीत् तदा भीत्या धावन्तीं काञ्चित् हरिणीं, तां खादितुम् अनुधावन्तं व्याघ्रं च दृष्टवान्।

आरुणिः तत्क्षणे एव स्वतपोबलेन हरिणीं स्त्रीरूपेण, व्याघ्रं च पुरुषरूपेण परिवर्तितवान्।

सः पुरुषः तां स्त्रियं दृष्ट्वा काममोहितः अभवत्। 'तिष्ठतु, तिष्ठतु' इति वदन् ताम् अनुसरन् सः पुरुषः तस्याः पुरतः आत्मनः प्रेमभावनां निवेदितवान्।

परस्परानुरागं दृष्ट्वा आरुणिः तयोः विवाहं निर्वर्तितवान्। तौ अरण्ये एव गृहं निर्माय सहजीवनम् आरब्धवन्तौ।

पतिः अरण्यं गत्वा पशून् मारयित्वा मांसं गृहम् आनयति। 'मांसं खादतु' इति पत्नीं साग्रहं वदति च।

पत्न्यै मांसाहारः सर्वथा न रोचते। निर्दयं पशुमारणं दृष्ट्वा सा अतीव खिन्ना भवति। सा अरण्यस्थान् हरिणः साधुप्राणिनः च आनीय गृहे प्रीत्या पोषयति। आरुणिः समीपे एव निवसन् एतत्सर्वं जागरूकतया परिशीलयति।

दिने दिने पतिपत्न्योः विरसः वर्धमानः एव जातः। पत्न्या पालितान् हरिणादीन् पशून् मारयित्वा खादति पतिः। तदा पत्नी असह्येन दुःखेन करुणं विलपति। पत्युः

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''

विषये सा तदा तदा कुप्यति च। "मया इव भवता अपि किमर्थं कन्दमूलफलादीनि न खादनीयानि?" इति अञ्जलिं बद्ध्वा सा पतिं निवेदयति।

"तत् न शक्यते। भवती एव अहम् इव मांसाहारं स्वीकरोतु। एषः एव पतिव्रताधर्मः" इति अधिकारवाण्या वदति पतिः।

अनतिकाले एव तयोः विरसः पराकाष्ठतां प्राप्ता। तथापि तयोः जीवने बहवः पुत्राः जाताः। पुत्रेषु केचन पितुः स्वभावम् अनुकुर्वन्ति स्म, अन्ये मातुः स्वभावम्। किन्तु तेषु रूपसाम्यं तु समानम् आसीत्।

पतिः पत्नीं सदा केनापि व्याजेन ताडयति। विविधपीडाभिः पीडयति च। एकदा पत्न्याः विषये क्रुद्धः पतिः मृगयायाम् इव खड्गादिकं स्वीकृत्य आक्रमणार्थम् आगतवान्। पत्नी भीत्या पलायनम् आरब्धवती। पतिः ताम् अनुसृत्य धावितवान्।

पत्नी धावन्ती आगत्य आरुणेः आश्रमं प्रविश्य निलीय स्थितवती। ताम् अनुसृत्य आगतः पतिः अपि तत्र आगतवान्।

आरुणिः उभौ प्रति अपि कानिचन सान्त्वनवचनानि उक्त्वा– "परस्परद्वेषपूवकं जीवनयापनेन कः लाभः? प्राणिनां जीवनम् इव जातं तदपि। भवतोः सहजीवनं पर्याप्तम्। इतःपरं भवन्तौ परस्परं वियुक्तौ भूत्वा स्वस्वजीवनमार्गम् अनुसरताम्" इति उक्त्वा तयोः हस्ते एकैकं बालं पर्णं दत्तवान् अनन्तरं पुनः उक्तवान् च– "एतत् स्वीकृत्य भवद्भ्यां परस्परविरुद्धायां दिशि गन्तव्यम्। यदा भवतोः हस्ते स्थितं पर्णं शुष्कीभवति तदा एतस्मात् जीवनात् भवतोः मुक्तिः" इति।

पतिः पत्नी च मुनिना दत्तं पर्णं स्वीकृत्य परस्परं विरुद्धदिशम् अनुसृतवन्तौ। यदा हस्तस्थितं पर्णं शुष्कं जातं तदा पुरुषः व्याघ्ररूपं प्राप्तवान्। स्त्री च हरिणरूपं प्राप्तवती।

तयोः पुत्राणां तु जन्मजातः गुणः यथापूर्वम् आसीत् एव।





# प्रत्युपकारः

## (४)

ग्रामज्येष्ठयोः अनुमतिं प्रष्टुं ग्रामीणौ उभौ धावितवन्तौ किल? तत्समये एषः विदेशीयः बालकस्य पादतलं हस्ततलं च हस्तेन सम्यक् मर्दितवान्। उरःस्थले अपि जागरूकतया मर्दनं कृतवान्। तदा बालकः मन्दं मन्दं नेत्रम् उन्मीलयन् 'आं हूम्' इति मन्दं शब्दम् उच्चरितवान्।

विदेशीयः समाधानेन निःश्वसन् गृहस्य पृष्ठभागं गतवान्। तत्रत्यस्य सस्यस्य तृणानि आनीय– "पश्यन्तु, एतानि पर्णानि सर्वेषां गृहस्य पृष्ठतः यथेष्टं सन्ति। एतैः बहून् रोगान् निवारयितुं शक्नुमः" इति वदन् तानि पर्णानि पिण्डीकृतवान्। हस्तेन एव सम्यक् मर्दयित्वा ततः निर्गतं रसं बालकस्य मुखे स्थापितवान्।

एतस्य औषधस्य प्रभावतः सः बालकः क्रमशः उत्थाय मातापितरौ पश्यन् मन्दहासं प्रकटितवान्। एतत् दृष्ट्वा माता महता सन्तोषेण विदेशीयं नमस्कुर्वती– "भवान् न मानवः, अपि तु साक्षात् देवः एव। मरणावस्थायां स्थितं मम बालकम् उज्जीवितवान् खलु भवान्?" इति उक्तवती।

अत्रान्तरे ग्रामज्येष्ठौ तत्र आगत्य उज्जीवितं बालकं दृष्ट्वा स्तम्भीभूय स्थितवन्तौ।

कनिष्ठः ग्रामज्येष्ठः विदेशीयं क्रूरदृष्ट्या पश्यन्– "अस्माकम् औषधेन अपि एषः बालकः न उज्जीवितः। भवतः औषधेन कथम् उज्जीवितः अभवत्? भवान् कोऽपि मान्त्रिकः एव स्यात्। किमर्थम् एतं ग्रामम् आगतवान्? सत्यं वदतु" इति कोपेन गर्जितवान्।

तदा सः विदेशीयः शान्तेन एव स्वरेण

उक्तवान्– "भोः, भवन्तः यथा चिन्तयन्ति तथा अहं न मान्त्रिकः, न वा मायावी। इतःपूर्वम् अहं हिमालये कस्यचित् संन्यासिनः समीपे आसम्। तस्य अनुग्रहेण सर्वाः विद्याः अपि सम्पादितवान्। ये कष्टे सन्ति तेषां साहाय्यं करणीयम् इति मम गुरोः आदेशः अस्ति। अतः अहं देशसञ्चारं कुर्वन् एतं ग्रामम् आगतवान्। मम नाम सुधाकरः इति। मम नेत्रयोः पुरतः एव एतस्य बालस्य प्राणानां निर्गमनम् अहं द्रष्टुं न शक्तवान्। अतः मम मत्यनुगुणं चिकित्सां कृतवान्" इति।

"भोः! आवयोः अनुमतिं विना भवान् बालस्य चिकित्सां कृतवान्। एतेन ग्रामस्य अपायः सम्भविष्यति। यं बालकं भवान् उज्जीवितवान् तस्य मातापितरौ भवन्तं कशया ताडयतः चेत् ग्रामस्य अपायः अपगच्छति। एतत् भवान् सोढुं सिद्धः वा? वदतु" इति उक्तवान् ग्रामज्येष्ठः।

"मम कशाताडनानुभवेन ग्रामस्य हितं यदि सिध्येत् तर्हि अहं तदर्थं सिद्धः एव" इति दृढस्वरेण उक्तवान् सुधाकरः।

ग्रामज्येष्ठौ सुधाकरस्य ताडनार्थम् आदिष्टवन्तौ। बालकस्य मातापितरौ एकैकां कशां स्वीकृत्य सुधाकरं ताडयितुम् आरब्धवन्तौ। शरीरतः रक्तधारा यथा निर्गच्छेत् तथा ताडनीयम् इति ग्रामज्येष्ठयोः आदेशः आसीत्।

"इदानीम् अस्माकं ग्रामस्य अपायभीतिः



अपगता। इतःपरम् एकं क्षणम् अपि भवान् अत्र न तिष्ठतु। साक्षात् इतः निर्गच्छतु" इति उक्तवन्तौ ग्रामज्येष्ठौ।

तदा सुधाकरः ग्रामज्येष्ठम् उक्तवान्– "मम उपस्थित्या यः अपायः आगच्छेत् तस्य निवारणार्थम् उपायं भवान् एव सूचितवान्। यस्मै अहम् उपकारं करोमि तेन दीयमानान् कशाप्रहारान् स्वीकुर्वन् अत्रैव स्थास्यामि। अहं कानिचन दिनानि अत्रैव स्थातुम् इच्छामि" इति।

तस्य वचनानि श्रुत्वा ग्रामज्येष्ठौ आश्चर्यचकितौ। तयोः एकः सुधाकरम् पृष्टवान्– "भवान् कश्चन मूर्खः। प्रहारान् स्वीकुर्वन् अपि अत्र स्थातुम् इच्छति किल? तेन भवतः कः लाभः?" इति।



"अहम् इतः गमनं सर्वथा न अङ्गीकरोमि" इति उक्तवान् सुधाकरः।

"भवान् इतः स्वयं न गच्छति-चेत् वयं बलात्कारेण निष्कासयामः" इति ग्रामज्येष्ठौ कोपेन गर्जितवन्तौ।

सुधाकरः मन्दहासपूर्वकम् उक्तवान्– "मम इच्छां विरुध्य कोऽपि मां बलात्कारेण इतः निष्कासयितुं न शक्नोति। यः बलात्कारेण मां गृह्णाति, ताडयति च सः एव ताडनम् अनुभवति। यः बलात्कारेण मां पातयितुम् उद्युक्तः भवति सः एव पतति। मह्यं यः विषं दातुं प्रयत्नं करोति स एव मरणं गच्छति" इति।

एतत् श्रुत्वा ग्रामज्येष्ठौ अतीव कुपितौ। तौ समीपस्थान् युवकान् आज्ञापितवन्तौ– "किं पश्यन्ति? एषः कश्चन मान्त्रिकः एव। एतं नीत्वा ग्रामात् बहिः त्यक्त्वा आगच्छन्तु" इति।

युवकाः झटिति सुधाकरस्य समीपं वेगेन गतवन्तः। तदा एकं विचित्रं प्रवृत्तम्। केनचित् क्षिप्ताः इव ते युवकाः सुदूरे पतितवन्तः।

एतत् दृष्ट्वा ग्रामज्येष्ठौ भीतौ। एतावत्पर्यन्तं ताभ्यां चिन्तितम् आसीत् यत् एषः कश्चन वैद्यः इति। किन्तु एतया घटनया तौ ज्ञातवन्तौ यत् एषः शक्तिमान् मान्त्रिकश्च अपि इति। तौ मधुरैः वचनैः जनान् वञ्चयितुं जानीतः। मन्त्रतन्त्रादीन् समस्यापरिहारोपायान् वा न जानीतः।

"अपकारिणः अपि उपकारः करणीयः इति सर्वाणि शास्त्राणि पुराणानि च वदन्ति।

अत्र तु उपकृतवन्तम् अपि कशाप्रहारैः ताडयन्तः मूर्खाः सन्ति। मादृशं विना एतादृशानां साहाय्यं कः कुर्यात्? एतेषाम् उद्धारः कथञ्चित् करणीयः एव। अतः एव अहम् अत्र किञ्चित्कालं स्थातुम् इच्छामि" इति उक्तवान् सुधाकरः।

'निश्चयेन एतस्मात् पुरुषात् अपायः आगमिष्यति' इति चिन्तयन्तौ ग्रामज्येष्ठौ कठोरस्वरेण उक्तवन्तौ– "भवादृशस्य दुराग्रहशीलाय अस्मिन् ग्रामे अवकाशः सर्वथा नास्ति। विना विरोधम् इतः गच्छतु" इति।

"भवान् वस्तुतः अपि मान्त्रिकः एव इति इदानीं ज्ञातम्। आवयोः विरोधम् आचरितुम् एव अत्र आगतवान् वा भवान्?" इति पृष्टवान् ग्रामज्येष्ठयोः ज्येष्ठः।

"अहं न मान्त्रिकः। परोपकारः एव मम प्रवृत्तिः। भवतोः सम्मुखींकरणं मम उद्देशः न। भवतां सेवार्थम् एव अत्र आगतवान्। परसेवां विना अहं जीवनं कल्पयितुम् अपि न शक्नोमि" इति उक्तवान् सुधाकरः।

सुधाकरेण यत् उक्तं तस्य अङ्गीकारं विना ग्रामज्येष्ठयोः अन्या गतिः न आसीत्। 'सम्मुखीकर्तुं न, सेवां कर्तुम् आगतवान्' इति सुधाकरेण यत् उक्तं तेन तयोः किञ्चित् मनःसमाधानं जातम्। "एवं चेत् अस्तु" इति वदन्तौ तौ अपमाननम् अन्तर्निगृह्य कृतकगाम्भीर्यं प्रदर्शितवन्तौ।

ग्रामज्येष्ठयोः कनिष्ठः जागरूकतां सूचयन् उक्तवान्– "एकं विषयं स्मरतु। आवयोः अनुमतिं विना कस्यापि साहाय्यं न करणीयम्। एतद्विषये जागरूको भवतु" इति।

"मया अपि किञ्चित् वक्तव्यम् अस्ति। यस्य उपकारः करणीयः इति मम मनसि भाति तस्य उपकारार्थम् अन्यस्य अनुमतेः प्रतीक्षां न करोमि। एतस्य देशस्य महाराजस्य आज्ञा आगता चेदपि परपीडनं कदापि न करोमि। सत्कार्यार्थं यदा कदापि भवन्तः आदिशन्तु, अहं सिद्धः" इति स्पष्टम् उक्तवान् सुधाकरः।

ग्रामज्येष्ठौ अनिच्छन्तौ अपि शिरश्चालनपूर्वकम् अङ्गीकारं सूचयन्तौ ततः निर्गतवन्तौ।



ग्रामज्येष्ठयोः गृहं परस्परं संलग्नतया एव अस्ति। गृहद्वयस्य मध्ये एका वितर्दिका अस्ति। अत्रैव ग्रामीणैः सह वार्तालापः प्रचलति। ग्रामीणाः अत्र स्वकीयं कष्टसुखं निवेदयन्ति।

तयोः गृहयोः पुरतः एकः मृद्राशिः आसीत्। मृद्राशेः उपरि वेदिकाकारकः विशालः अवकाशः अपि अस्ति। ग्रामज्येष्ठौ सुधाकरस्य निमित्तं तत्र एकं कुटीरं निर्माय वसतिव्यवस्थाम् उपकल्पितवन्तौ।

ग्रामज्येष्ठौ सुधाकरं विचित्रं मनुष्यम् इव पश्यतः। सः मन्त्रतन्त्रादिकं जानन् अपि कुत्रापि प्रयोगं न करोति स्म। सदा मन्दहासपूर्वकम् एव व्यवहरति। केनापि कारणेन कस्यापि विषये कोप न प्रदर्शयति।

प्रतिदिनम् अपि सः ग्रामे सञ्चारं कृत्वा कस्य किं कष्टम् इति विचारयति। कष्टनिवारणार्थं सुलभान् उपायान् सूचयति च। अनन्तरं ग्रामज्येष्ठयोः सूचना या अस्ति तदनुगुणं विंशतिः कशाप्रहारान् स्वीकृत्य मौनं वेदनाम् अनुभवति।

एवम् एव कानिचन दिनानि अतीतानि। इदानीं ग्रामीणानां मनसि अपि भाति – एषा पद्धतिः क्रूरा इति। अतः केचन ग्रामीणाः ग्रामज्येष्ठयोः समीपं गत्वा उक्तवन्तः– ''यः उपकारं कृतवान् तस्य ताडनम् अस्मासु महतीं व्यथां जनयति। अतः एषा पद्धतिः इतःपरं न अनुवर्तेत इति अस्माकम् अभिप्रायः'' इति।

एतत् श्रुत्वा ग्रामज्येष्ठौ कोपमिश्रितेन स्वरेण उक्तवन्तौ– ''किम्? आवाम् एव हितम् उपदिशन्ति वा? सः सुधाकरः महामायावी। कुटिलः मान्त्रिकः च। भवतां कशाप्रहारेण तस्य कापि वेदना न भवति। तं ग्रामात् निष्कासयितुम् अशक्तौ आवां मौनं स्थितवन्तौ। सः स्वार्थं किमपि साधयितुम् इच्छन् अत्र आगतवान् अस्ति। मान्त्रिकतः साहाय्यस्वीकरणं वस्तुतः अस्माकम् अनिष्टाय एव। यदि भवन्तः इच्छन्ति तर्हि कदाचित् तस्मै प्रहारम् अदत्त्वा परिणामं परिशीलयन्तु। तदा किं सम्भवेत् इति भवन्तः एव जानीयुः'' इति। (अनुवर्तते)






कपिमानवाः (एप्स्) कपयः इव भवन्ति चेदपि तेषां पुच्छं न भवति। तयोः अन्यः प्रधानभेदः नाम कपिमानवानां हस्ताः पादापेक्षया दीर्घाः भवन्ति। कपीनाम् अपेक्षया कपिमानवानां बुद्धिः अपि अतीव तीक्ष्णा।




टौकान् पक्षिणः नासिका यद्यपि भारयुता इव दृश्यते तथापि सा तथा न। सा नासिका सूक्ष्मैः पटलैः निर्मिता, दृढैः अस्थिभिः आवृता च। अत एव सा बलयुता चेदपि न भारयुता।

## हिमखण्डमयः उडुपः



अण्टार्कटिकाखण्डेन सम्पर्कं कल्पयन् ५०० मैल् दीर्घः रास् हिमपर्वतः वस्तुतः जलस्य उपरि प्लवमानः हिमखण्डमयः उडुपः! एतस्य औन्नत्यं २०० फुट्। वैशाल्यं च ६०० मैल् भवेत्!

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अङ्गारः – Charcoal
अतिक्रान्तः – Crossed
अन्तरितम् – Covered
अभिज्ञाय – Having identified
अल्पतृप्तः – Contented
आतपः – Sunshine
इयत्ता – Limitation
उडुपः – Float
उपशमनम् – Mitigating
कङ्कतिका – Comb
कांस्यम् – Bronze
कुक्कुटः – Cock
कुट्टनम् – Pounding
कूपिका – Bottle
कृकलासः – Lizard
कृत्यम् – Work
कोटरम् – Hollow of a tree
चटकः – Sparrow
चिरस्थायी – Durable
छुरिका – Knife
जम्बीरः – Lemon
जालम् – Net
निद्राति – Sleeps
नियतरूपेण – Promptly
नीडम् – Nest
पक्षः – Feather
पङ्गुः – Lame man
पराकाष्ठा – Extremity
पाकशाला – Kitchen
पुष्टः – Hefty
पौरः – Citizen
भागिनेयः – Sister's son
भूशुल्कम् – Tenancy dues
मथनम् – Churning
मार्जारः – Cat
रजतम् – Silver
लुण्ठनम् – Robbery
लुण्टाकः – Robber
वितर्दिका – Pyol
विद्वत्ता – Erudition
विमोचनम् – Liberation
व्यञ्जनम् – Curry
शावकः – Young one
समर्थः – Capable

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां अगस्ट्-८७ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जून्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४

---

## 'एप्रिल्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् -

द्वितीयचित्रम् -

प्रेषकः—




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# व्रीहयः विक्रीताः वा?

| | |
|---|---|
| हालेशः— किं भोः, व्रीहयः विक्रीताः वा? | What news ! You have sold the paddy ? |
| दानेशः— कथं वा विक्रेतुं शक्येत भोः? मूल्यं तु अत्यल्पतां गतम् अस्ति! | How can I, my dear man ? The price has gone down terribly ! |
| हा— आं, मूल्यं शोचनीयतां गतम्। मासात् पूर्वं ये · विक्रीतवन्तः ते एव भाग्यशालिनः। | Yes, the price has lamentably gone down. Those who sold it a month ago must be said to have been lucky. |
| दा— वस्तुतः मया अपि तदा एव विक्रीतं चेत् समीचीनम् अभविष्यत्। तदा 'मूल्यं वर्धेत' इति आशा आसीत्। | Frankly speaking, if I too had sold then, it would have been better. The expectation was that the prices would go up. |
| हा— एवं तर्हि व्रीहिविक्रयणं न जातम् एव? | So it was that the paddy was not sold? |
| दा— नैव भोः, खलेबुससमये योग्याः ग्राहकाः न लब्धाः। अतः अत्र पश्यतु, व्रीहयः गोणीषु बद्ध्वा स्थापिताः। | Not exactly, no buyer was available during the harvest season. That is how you see the paddy bags are lying here. |
| हा— किमर्थम् इतोऽपि कुसूले न स्थापितम् ? | Why not put it in the granary then ? |
| दा— कुसूले स्थापितं चेत् जीवनं कथं प्रचलेत् भोः? अतः सहकारिसंस्थायै प्रेषयन् अस्मि। | Keeping it in the granary, how can we carry on ? So I am sending it to the co-operative society. |
| हा— तत्र विक्रीणीते वा? | Can it be sold there ? |
| दा— न, सद्यःकाले तु तेषां धान्यभाण्डागारे एतत् स्थापयामि। तदाधारेण ऋणम् आनयामि। मासद्वयानन्तरं मूल्यस्य स्थितिगतिं दृष्ट्वा तथैव, तण्डुलान् कृत्वा वा विक्रेतव्यम्। | The idea at present is to put it into their godown and get a loan on the strength of it. In the light of the position of the prices after two months I will see if it can be sow or should be dehusked and sold as rice. |
| हा— मासद्वयानन्तरम् अपि योग्यं मूल्यं लभ्येत इति मम तु विश्वासः नास्ति। | But I am not sure if even after two months we will get a reasonable price. |